# ॥ श्रीवेणुगीतसुबोधिनी ॥

श्रीमद्भागवतम्—इत्थंशरत्स्वच्छजलं पद्माकरसुगन्धिना ।
न्यविशद्वायुना वातं सगोगोपालकोच्युत

सुबोधिनी—अष्टादशे गोपिकानामासक्तिर्वर्ण्यते स्फुटा ।
वर्ण्यवर्णकभेदेन गोपानामपि सोच्यते ॥ १ ॥
प्रवेशबोधने तासामुद्बोधाय निरूपिते ।
तद्गुणेषु प्रसक्ता हि तदासक्ता भवन्ति हि ॥ २ ॥

टिप्पणी—अष्टादशेऽध्याये गोपानामपि सोच्यत इत्यत्र—बालका हि यत्किञ्चिदद्भुतमनुभूय स्वबाल्यस्वाभाव्यादेवोत्साहवशात् सर्वेषामग्रे तद् वदन्ति तथा नैतेऽर्हकं किन्तु प्रभवास्तथा । तस्यास्त्वयं स्वभावो यत् स्वसमानशीलेष्वेव स्वसर्वस्वतया ज्ञातं प्रभुचरित्रं व्यक्ततया वादयति । वादरूवमेतास्वेवेति गोपाः स्वस्वगृहे ताभ्य एव समाचख्युः । इदमेव सम्यक्त्वं चक्षणे । एतेन यथा दिवैतासां गुणगानं तथैतेषां निशीति ज्ञापितं भवति । एवञ्च प्रकरणादौ ज्ञापितमिति तदन्ते च व्रज ज्ञापितमन्तरङ्गक्रीडार्थं वनप्रवेशे गोपारुसाहित्यकथनेन । अन्यथा व्रतवरदानार्थं गच्छन् यथैतान् सङ्गे न नीतवांस्तत्कार्यं कुर्वद्भिः सहितो जातस्तद्वद्वय"स्थ गोपैः परिवृत" इत्यनेन तथात्रापि कुर्यात् तदेतद्धृदि कृत्वोक्तं गोपानामपि सोच्यत इत्याचार्यैः । यथा स्वामिन्यो गृहेषु स्थिता अपि वने दिवा कृतां लीलां भगवद्भावानुभावेन स्वहृदयेष्वनुभूय गायन्ति तथैतेपि निशि कृतां लीलामासक्तिभरानुभावेन स्वस्वहृदयेष्वनुभूय गायन्ति । सा चातिगोप्येति शुकैः स्फुटतया नोक्ता । एतद्गानकथनेनैवोक्ता भवति । गानहेतुभूतासक्तेस्तुल्यत्वात् सा च ज्ञापितैवेति तत्कार्यमपि सुतरां ज्ञापितं भवति । तदेतदुक्तं वर्ण्यवर्णकभेदेनेत्यनेन । वर्ण्यं वर्णनीयं रात्रिचरित्रम् । वर्णका वर्णनकर्तारो गोपाः । तत्र दिवाचरित्रे स्वामिन्यश्चेतिभेदः ॥ का. १ ॥

आसक्तिनिरूपणमुपपादयन्ति तद्गुणेष्वित्यादिना । अत्रैतज्ज्ञेयम् । गुणासक्तिलक्षणकार्येण भगवदासक्तिर्ज्ञाप्यते । आसक्तिः प्रेमोत्तरभाविनीति तन्निरूपणेन प्रेमापि निरूपितो भवति । स चाद्यश्लोकेन निरूप्यते । स तूद्बुद्ध एवासक्तिं जनयति । अयं तु लौकिकवत् कोकिलादिकूजनेन नोद्बुद्धो भवत्यलौकिकत्वादतः प्रभुकृतमेव च तदुच्यते ॥ का. २–३ ॥

श्रीवेणुगीतस्य श्रीसुबोधिनीटिप्पण्युपरि श्रीपीताम्बरजित्कृतो लघुप्रकाशः ।

अष्टादशेऽध्याये सामान्यविशेषभावः सङ्गतिरित्यभिप्रायेणाहुरष्टादश इत्यादि । विशेषमेवाहुः स्फुटेति । अत्र तृतीयपादो देहलीदीपवदुभयत्रोपकरोति । गोपानामासक्तिर्न स्फुटेति टिप्पण्यां साधयपादयन्ति बालका हीत्यादिना । एतद्गानकथनेनेति । 'अन्ये तदनुरूपाणी'त्यत्र गोपकर्तृकगानकथनेनेत्यर्थः ॥ ॥ का. १ ॥

श्रीवेणुगीतस्य श्रीसुबोधिनीटिप्पण्युपरि श्रीपीताम्बरजित्कृतो बृहत्प्रकाशः ।

अष्टादशाध्यायतात्पर्यं निरूपयन्तः पूर्वाध्यायादिसङ्गतिमाहुरष्टादश इति । 'जनास्तापं जहुर्गोप्यो न कृष्णहृतचेतस' इत्यन्तेन स्वामिनीनामासक्तिर्निरूपिता । तथा पूर्वमपि । परन्तु वर्ण्यानामभावाद् यदिमं स्फुटेत्यमिमध्याये स्फुटा निरूप्यत इति सामान्यविशेषभावः प्रकरणाध्याययोः सङ्गतिरित्यर्थः । अन्वस्मिन् प्रकरणे मुख्यः स्त्रीणामेव निरोध इति पूर्वं पद्याध्यायीसिद्धस्य गोपनिरोधस्यैतदर्थत्वं वक्तव्यं तदत्र कथमि-

आसक्तिः प्रेमपूर्वैव प्रेमापि हरिणा कृतम् ।
उद्बोधकं च हरिणा कृतं नान्येन केनचित् ॥ ३ ॥
आसक्तया वर्णनं तस्माद् विद्यान्ते वर्ण्यते स्फुटम् ॥ ३½ ॥

फलितमाहुरासक्त्या वर्णनमिति । आसक्तौ सत्यामपि यावद् भगवान् स्वयं न ज्ञापयति तावत् स्वरूपलीला न ज्ञातुं शक्यन्ते यतस्तस्माद्धेतोरेकेन श्लोकेन 'बर्हापीड'मित्यनेन गानोपक्रमान्ते विद्यारूपं सपरिकरं ब्रह्मस्वरूपज्ञानं स्फुटं यथा भवति तथा वर्ण्यत इत्यर्थः । पूर्वं नादब्रह्मात्मकामूर्वविद्यामन्तरेवानुभावयित्वान्तरेव तत्फलभूतं गानेन स्वरूपानुभवं कारितवान् । अग्रे तु स्वलोकात्मकव्यापिवैकुण्ठस्य बहिरनुभवात्मकविद्यया तत्फलभूतं बहिरङ्गसङ्गेन स्वरूपानन्दानुभवं कारयिष्यतीति ज्ञापनायाप्यत्र विद्यात्वनिरूपणमिति ज्ञेयम् । यद्वा श्लोकपञ्चकानन्तरं गानारम्भोक्तिव्यञ्जितमर्थमाहुर्विद्यान्त इति । विद्याया अन्त इत्यर्थः । सा हि पञ्चपर्वात्मिका । तथा च गानोक्तेः पूर्वश्लोकेषु तत्समानसङ्ख्यत्वात्तथा तेषु तत्त्वं लक्ष्यते । तथा च ब्रह्मविद्यातोऽप्याधिक्यं तस्या अपीदं फलमिति ज्ञाप्यत इत्याशयः ॥ का. ३½ ॥

सुबोधिन्यां नन्वासक्तिवर्णनप्रस्तावे वृन्दावनप्रवेशकूजनयोर्वर्णनस्य किं प्रयोजनमत आहुः प्रवेशेत्यादि । उद्बोधायेति । आसक्त्युद्बोधाय । मूले गुणवर्णनाद् गुणासक्तिरेव स्फुटा न तु भगवदासक्तिरिति प्रथमं श्लोकद्वयमेव न सङ्गच्छत इत्याशङ्कायां टिप्पण्यामाहुरासक्तीत्यादि । ज्ञाप्यत इति । स्फुटीक्रियत इत्यर्थः ॥ का. २ ॥

नन्वेवं सति गुणेष्वेव मुख्यासक्तिरायाति न तु भगवतीतिशङ्कायामाद्यपद्यद्वयोक्तप्रवेशबोधनाभ्यां भगवदासक्तेरेव मुख्यत्वं बोध्यत इत्याहुरासक्तिः प्रेमपूर्वेत्यादि । तद् विवेचयन्ति टिप्पण्यामासक्तिः प्रेमोत्तरेत्यादिना । तथा च यदि भगवतस्तासु प्रेमा न स्यात् वृन्दावने प्रविशेत् प्रविश्य वा न बोधयेत् । यतः प्राविशदबोधयच्चातस्तासु भगवतः सोऽस्तीति निश्चीयते । तेन भगवतः स्वस्मिन् प्रेमावगत्यैतासामासक्तिरुद्बुद्धेति सैव मुख्या न तु गुणासक्तिरितिभावः ॥ का. ३ ॥

त्याकाङ्क्षायां गोपेष्वपि तामाहुर्वर्ण्यमित्यादि । तथा च तद्वर्णनप्रयोजकत्वेन गोपनिरोधस्यापि तदर्थत्वमित्यर्थः । गोपानामासक्तिर्न स्फुटेति टिप्पण्यां तामुपपादयन्ति बालका हीत्यादिना । एतद्गानकथनेनैवोक्तेति । 'अन्ये तदनुरूपाणी' त्यत्र गोपकर्तृकगानस्य सिद्धत्वादत्र स्वामिनीगानकथनेनैव सूचिता । तदाहुर्गानेत्यादि ॥ का. १ ॥

सुबोधिन्यां नन्वासक्तिवर्णनप्रस्तावे वृन्दावनप्रवेशकूजनयोर्वर्णनस्य किं प्रयोजनमत आहुः प्रवेशेत्यादि । प्रवेशबोधने तासां प्रेमोद्बोधाय निरूपिते । ननु मूले 'गोपैस्तयोस्तदद्भुत'मित्यादिपूर्वाध्याये गुणवर्णनाद् गुणासक्तिरेव तेषां स्फुटा न तु भगवदासक्तिरित्यासक्त्या वर्णनकथनं कथमित्याशङ्कायां हेतुस्तद्गुणेष्विति । तद्गुणेष्वित्यादिना यदुक्तं तट्टिप्पण्यां स्फुटीकुर्वन्त्यासक्तीत्यादिना । कारिकायां हिर्हेतौ बोध्यः । तदाहुर्ज्ञाप्यत इति । स्फुटीक्रियते ॥ का. २ ॥

ननु ये गुणासक्तास्ते, गुणिन्यासक्ता भवन्तीति न नियम इति भगवदासक्तिर्गौणी स्यादित्याकाङ्क्षायामासक्तिः प्रेमपूर्वैवेति यदुक्तं तद्विवृण्वन्त्यासक्तिः प्रेमोत्तरेत्यादिना । तथा चाद्ये श्लोके गोगोपालसाहित्यकथनेन प्रेमापि निरूप्यते । यदि हि तेषां स न स्यात् भगवांस्तान् सङ्गे न स्थापयेदिति सा न गौणीत्यर्थः । ननु भवत्वेवं तथाप्याद्यश्लोकद्वयोक्तस्वामिनीप्रेमोद्बोधकस्य किं प्रयोजनमित्याकाङ्क्षायां प्रेमापीत्यादिना यदुक्तं तद् विवृण्वन्ति सा त्वित्यादिना । तदिति । उद्बोधकद्वयम् । तथा च यदि भगवतस्तासु प्रेमा न स्यात् वृन्दावने

कालाधिको हरिश्चात्र पुरुषोत्तम एव च ॥ ४ ॥
त्रयोदशविधा लीला तत उक्ता पृथक् पृथक् ॥ ४३ ॥

भगवल्लीलार्थं पूर्वाध्यायान्ते शरद् वर्णिता ततोत्र लीलार्थं भगवतो वृन्दावनप्रवेश उच्यत इत्थमिति ।

इत्थम्भूता या शरत् तया स्वच्छं जलं यस्मिन् वृन्दावनं तादृशमच्युतो न्यविशदिति-सम्बन्धः । अत्रापि पूर्ववदाधिदैविकीभिः शक्तिभिर्लीला वक्तव्या । तत्र नायकोत्कर्षार्थमच्युत इत्याह । तत्रापि गावोनुभाविकाः । गोपालाः सेवकाः । शक्तीनां निर्भयत्वायैते देवाः साक्षिणः । रमणं जलस्थलभेदेन द्विविधम् । निर्भररमणे च वायोरपेक्षा । जलक्रीडायां तु नैर्मल्यं शीता-

श्लोकसङ्ख्यातात्पर्यमाहुः कालाधिक इत्यादिना । द्वादशमासात्मकः कालो द्वादशाङ्गः पुरुषश्च । इह तदधिकसङ्ख्यया गेये तदधिकत्वं ज्ञाप्यत इत्यर्थः ॥ का. ४-४३ ॥

आसक्त्येति । भगवदासक्त्येत्यर्थः । एतदुपष्टम्भाय परिचायकान्तरमाहुर्विद्यान्त इति । 'भक्त्या मामभिजानाती'तिवाक्याद् तथा भगवज्ज्ञानं भवति । यद्यत्र भगवदासक्तिर्न स्याद्'बर्हापीडे'त्यनेन विद्या नोच्येत । तथा चान्ते विद्या वर्ण्यते तस्मादासक्त्या वर्णनं स्फुटमित्यन्वयः । नन्वेवं सति 'यमेवैष' इतिश्रुतिविरोध इत्याशङ्कायां विद्यान्त इत्यादेस्तात्पर्यं टिप्पण्यामाहुरासक्तावित्यादिना । वर्ण्यत इति । शुकेन वर्ण्यत इत्यर्थः । तथा च न श्रुतिविरोध इतिभाव । विद्यापदस्य तात्पर्यान्तरमाहुः पूर्वमित्यादिना । विद्यान्त इत्यत्र विद्याया अन्त इति समस्तपष्ठीकं पदमङ्गीकृत्य पक्षान्तरमाहुर्यद्वेत्यादि । एवं च 'बर्हा-[...] श्लोकोक्तभगवत्स्वरूपानुभवो ब्रह्मभावोत्तर-[...]या भवति 'भक्त्या मामभिजानाती'त्यभि-[...] । स चाग्रे'क्षण्वता'मित्यादौ स्फुटस्तेनात्रा-[...] वर्णनं निश्चीयत इतिभावः ॥ का. ३ ॥

[...] अभिज्ञास्वरूपं प्रकटयन्ति श्लोकेत्यादिना । [...]र्थकारिकायां वर्ण्यत इतिक्रिया सर्वत्रानुषज्यते ॥ का. ४-४३ ॥

प्रविशेत् प्रविश्य वा न बोधयेद्यतः प्राविशदबोधयच्चात स्तावत् भगवतः सोस्तीति निश्चीयते । तेन भगवत स्वस्मिन् प्रेमावगत्यैतासां प्रेमोद्बुद्धमिति स एव मुख्य इत्येतज्ज्ञापनं प्रयोजनमित्यर्थः । तद् स्फुटीकुर्वन्ति फलितमित्यादिना ॥ का. ३ ॥

आसक्त्येति । भगवदासक्त्या । ननु 'कुसुमितवनराजी' त्यत्रोद्बोधकान्तरस्याप्युक्तत्वेनात्रोद्बोधकान्तरस्यापि कल्पयितुं शक्यत्वाद् भगवत्कृतमेवोद्बोधकमित्यत्र किम्मानमित्याकाङ्क्षायां विद्यान्ते वर्ण्यते स्फुटमित्यनेन यदुक्तं तद् विवृण्वन्त्यासक्तावित्यादिना न ज्ञातुं शक्यन्ते । 'यमेवैष वृणुते तेन लभ्य' इतिश्रुतेर्न ज्ञातुं शक्यन्ते । वर्ण्यत इति । शुकेन वर्ण्यते । तथा चेदं शुककृतं वर्णनमेव भगवत्कृतोद्बोधकोद्बोध्यत्वगमकं स्फुटमित्यर्थः । एवं च तस्मादितिपदमत्रापि हेतुत्वेनान्वेतीति बोध्यम् । विद्यापदस्योपासनायामिव साक्षात्कारेपि प्रयोगात् तमभिप्रेत्य विद्यापदस्य तात्पर्यान्तरमाहुः पूर्वमित्यादिना । विद्यापदस्य तदुभयस्मिन्निव विद्याशक्तावपि रूढेर्विद्यान्त इति समस्तषष्ठीकं पदमङ्गीकृत्य पक्षान्तरमाहुर्यद्वेत्यादि । एवं च 'बर्हापीडे'तिश्लोकोक्तभगवत्स्वरूपानुभवो ब्रह्मभावोत्तरभाविभक्त्या भवति 'भक्त्या मामभिजानाती'त्यभिज्ञारूपः । स चाग्रे'क्षण्वता'मित्यादौ स्फुटस्तेनात्रासक्त्यैव वर्णनं निश्चीयत इतिभावः ॥ का. ३३ ॥

अभिज्ञास्वरूपं प्रकटयन्ति श्लोकेत्यादिना । कारिकाद्वये वर्ण्यत इतिक्रिया सर्वत्रानुषज्यते । कारिकार्थस्तु यतः प्रलापकत्वेपि हरित्वात् कालाधिकश्च पुनरक्षण्वत्फलत्वात् पुरुषोत्तमः क्षराक्षरादुत्तम एवात्र भक्तवाक्येषु वर्ण्यते चोद्बोधोद्बोध्यसम्बन्धात्मकस्ततः सा लीला तथेत्यर्थः ॥ का. ४-४३ ॥

कुसुमितवनराजिशुष्मिभृङ्गद्विजकुलजुष्टसरःसरिन्महीध्रम् ।
मधुपतिरवगाह्य चारयन् गाः सहपशुपालबलश्चुकूज वेणुम् ॥ २ ॥

भावश्च । शरदा नैर्मल्यं शीताभावश्चोक्तः । शरत्स्वच्छजलमिति । शरदा स्वच्छानि जलानि यत्र । विशेषतः कर्मानिर्देशात् क्रीडार्थं जलप्रवेशश्च । पद्माकराणां सुष्ठु यो गन्धः शैत्यसहितस्तद्वान् सुगन्धी । एतादृशवायुना वातं वनं न्यविशत् । गन्धवत्त्वेनैव मान्द्यमुक्तम् । एतावदेव क्रीडायामपेक्षितम् । विशेषणरूपेणामेव प्राधान्यात्र विशेष्यनिर्देशः । निवशं प्रवेश आधिदैविकपर्यन्तः ॥ १ ॥

प्रवेशमुक्त्वा देवतोद्बोधनमाह कुसुमितेति ।

मधुपतिर्गाश्चारयन् वेणुं चुकूज । वसन्ताधिपतिः सरसः शृङ्गारात्मा धर्मं कुर्वन् क्रियाज्ञानशक्तिसहितो देवतोद्बोधनाय वेणुनादं कृतवान् । उद्बुद्धा देवताः सामग्र्यभावान्न रता भवन्तीति भगवतो मधुपतित्वं निरूपितम् । विभावादीन् निरूपयति । कुसुमिता या वनराजयस्ताभिर्ये शुष्मिणो मत्ता जाता भृङ्गाः पक्षिणश्च तेषां कुलान्यवान्तरजातिभेदास्तैर्जुष्टानि सरितः सरांसि महीध्राः पर्वताश्च यस्मिंस्तानेव वा । एकवद्भावः । एवंविधमवगाह्य तत्रत्यानपि त्रिविधानुद्बोधयितुं केवलं शृङ्गारार्थमेव कूजनं कृतवान् ॥ २ ॥

इत्थंशरत्स्वच्छजलमित्यत्र—घ्नकीनां निर्भयत्वायेत्यादि । अलौकिकत्वनित्यत्वस्वाभाविकधर्मत्वज्ञापनायैतदनभिज्ञेषु गोपनाय भगवद्भोग्यसीमन्तिनीषु शक्तिपदप्रयोगः । स्वाय तद्भेशारहितः फलभोगसमपेक्षो यथाविकारं तत्र प्रवर्तकश्च साक्षी भवति यथा परमात्मा । तादृशत्वमन्तरङ्गत्वाद् गोपेष्वस्तीति साक्षित्वमुक्तम् ॥ १ ॥

कुसुमितेत्यत्र—धर्मं कुर्वन्नित्यादि । धर्मो हि साक्षात्परम्पराभेदेन चतुर्वर्गस्यापि साधकः । अवगाहनं च तत्रतत्र तथातथा लीलाकरणार्थम् । एवं सति लोकसिद्धे कार्यान्तरे विना तत्र गमनं चिरं स्थित्यादिके च लोकविरुद्धे लोके विकीर्पितलीलाज्ञानं च रसविरुद्धमिति सर्वसमाधानपूर्वकं सर्वसम्पादकं गोचारणमितिभावेन धर्मत्वोक्तिः ॥ २ ॥

तद् व्रजस्त्रिय आश्रुत्य वेणुगीतं स्मरोदयम् ।
काश्चित् परोक्षं कृष्णस्य स्वसखीभ्योन्ववर्णयन् ॥ ३ ॥
तद् वर्णयितुमारब्धाः स्मरन्त्यः कृष्णचेष्टितम् ।
नाशकन् स्मरवेगेन विक्षिप्तमनसो नृप ॥ ४ ॥
बर्हापीडं नटवरवपुः कर्णयोः कर्णिकारं
बिभ्रद् वासः कनककपिशं वैजयन्तीञ्च मालाम् ।
रन्ध्रान् वेणोरधरसुधया पूरयन् गोपवृन्दै-
र्वृन्दारण्यं स्वपदरमणं प्राविशद् गीतकीर्तिः ॥ ५ ॥

एवमुद्बोधनमुक्त्वा ताभिः सह रमणे कामिनीकामोद्बोधकत्वात् कूजितस्य व्रजस्त्रियोप्युद्बुद्धकामा जातास्ततः कामवशाद्भगवदुद्बोधार्थं स्वसखीभ्यः स्वसमानशीलव्यसनाभ्यस्तद्गुणान् वर्णयितुमारेभिर इत्याह तद् व्रजस्त्रिय इति ।

आसमन्ताच्छ्रुत्वाधिदैविकत्वात् । अन्यथा कथं वनस्थितो वेणुनादो व्रजस्थिताभिर्गोपिकाभिरेव श्रूयेत? यथा सर्वे देवा उत्थिता एवं स्मरोपि। उद्दीपनविभावत्वान्नादस्य । तन्मध्ये काश्चन स्मरेण मूर्च्छिता एव । काश्चित् पुनः कृपया भगवत्सङ्गं प्राप्य कृष्णस्य परोक्षे विद्यमानाभ्यः स्वसखीभ्योनु भगवत्करणानन्तरमेवावर्णयन् वर्णितवत्यः ॥ ३ ॥

तासामपि पुनः कामोद्बोधे विशेषतो वर्णनाशक्तिर्जातेत्याह तद् वर्णयितुमिति ।

तत् स्वानुभूतं भगवद्रूपं वेणुगीतं वा वर्णयितुं कार्यतः कारणतः फलतः स्वरूपतश्च निरूपयितुमारब्धवत्यस्ततो मध्ये वर्णनार्थं कृष्णचेष्टितं स्मरन्त्यस्तत्स्मरणजातेन स्मरेण यो जातो वेगश्चित्तचाञ्चल्यं तेन विक्षिप्तमनसो जाताः । नृपेतिसम्बोधनं धर्मवत्त्वेन जितेन्द्रियत्वाय ॥ ४ ॥

ताभिर्वर्णयितुमशक्यं स्वयं वर्णयति तथात्वज्ञापनाय बर्हापीडमिति ।

तद् व्रजस्त्रिय आश्रुत्येत्यत्र–गोपिकाभिरेव श्रूयेतेति । एतदितरश्रवणाभावे प्रमाणापेक्षायामाह्यते । भगवान् हि सप्रयोजनकमेव कार्यं करोति । न त्वन्यथापि जीववत् । अत्र च रमणार्थं भावोद्बोधः प्रयोजनम् । एवं सति यासु तदभावस्तासु तच्छ्रवणं निष्प्रयोजनकमिति प्रभुर्न करोत्येवेति ज्ञेयम् । एतेन 'श्रुतं सर्वैः परन्तु स्थायिभावोत्रैवास्तीत्यत्रैव तदुद्दीपनं नान्यत्रे'ति निरस्तम् । सर्वज्ञस्य तादृक्कृत्यासम्भव इत्युक्तत्वात् । नादनिष्ठामृतस्य स्वप्रवेशमात्रेणैव भगवदीयत्वकरणलक्षणस्वभावस्यातिप्रसङ्गश्च ॥ ३ ॥

तद् व्रजस्त्रिय इत्यत्र–गोपिकाभिरेवेत्येवकारतात्पर्यं टिप्पण्यामाहुरेतदितरेत्यादि । अत्र भगवता दृष्टश्रवणदर्शनसिद्धिर्भगवतो यत्र स्वामिनीभावत्वेनाङ्गीकारस्तत्रैव स्थापितेति तासामेव श्रवणं नान्येषामिति प्रभुरुक्तमेतदित्यादि ॥ ३ ॥

बर्हापीडेत्यत्र—नन्वयं श्लोकः पूर्वोत्तरश्लोकानन्वितः। तथा हि। पूर्वं वर्णयितुं नाशकन्नित्युक्त्वा वृन्दारण्यं प्राविशदित्युक्तेरग्रे चेतिवेणुरवं श्रुत्वा वर्णयन्त्योऽभिरेमिर इत्युच्यते । एवं सति स्पष्टैवा-सङ्गतिर्मध्यस्थस्यास्य श्लोकस्येति चेदत्रेदं प्रतिभाति । आद्ये प्रवेशमात्रमुक्तं न तु विशेषतः कर्मो-क्तम्। द्वितीये च पूत्र वेणुं चुकूजेत्युक्तम्। ततस्तत्कूजितमाश्रुत्येत्युक्तम् । तेन कूजनस्वभावा-देव भावोद्दीपनं प्राप्तम्। पश्चादग्रिमकार्यार्थं लीलाविशिष्टं स्वरूपं वेणुद्वारा प्रियेण गीतमाश्रुत्ये-त्युक्तम्। एवं सत्याश्रुत्येत्यस्यावृत्तिर्ज्ञेया। गीतं हि स्पष्टार्थकं रसनिरूपकं च भवति। तच्छ्रवणेन लीला-विशिष्टस्वरूपानुभवो हृद्यभूदत एव कृष्णचेष्टितं स्मरन्त्य इत्युक्तम्। तदा तस्याननुभवात्। ततस्तद्विना स्थातुमशक्तास्तद्भावस्वभावादेव तदेवान्ववर्णयन्नित्युक्तम्। एतद्वर्णनं तदा स्याद्यदि गुणलीलाविशिष्टं स्वरूपं सर्वांशेनानुभूतं स्यात्। प्रकृते च स्मरोदयमेव गीतं प्रियेण कृतमिति न सर्वात्मना तदनुभवो-तोऽशक्तिरभूत्। एवं सति चिकीर्षितकार्यासम्पत्तिं दृष्ट्वा पूर्वं तादृशं नादं प्रकटितवान् यच्छ्रवणेन गुण-लीलाविशिष्टमुद्बुद्धरसात्मकं स्वरूपं सर्वेन्द्रियप्राणान्तःकरणजीवेषु पूर्णमाविरभून् तदा तद्वर्णनमभूदभितो रमणमपि। एवं सति पूर्वं वर्णनाशक्तिमुक्त्वाग्रे तच्छक्तिहेतुं चैकेन श्लोकेनोक्त्वा शुका आहुरिति वेणुरवमिति। एवम्भूतं पूर्वोक्तश्लोकोक्तरूपं न तु पूर्ववत् केवलं वेणुरवमित्यर्थः। एवं सति तद् व्रजस्त्रिय आश्रुत्य तद् वर्णयितुं नाशकन्ननेवंरूपत्वात्तस्य। इतिवेणुरवं—बर्हापीडेतिश्लोकोक्तं वेणुरवमित्यर्थः—श्रुत्वा वर्णयन्त्योऽभिरेमिर इति श्लोकसङ्गतिर्निःप्रत्यूहा सिद्धावारतम्येन रसानां क्रमेणाविर्भावे महान् रस इत्येवं करणं दुर्लभत्वं चैतस्य रसस्य ज्ञापितम्। परमकाष्ठापन्नस्वतन्त्रमहाफलदित्सयैवं कृतवान् प्रभुरिति ज्ञेयम्। अन्यथा शक्रशर्वादीनामज्ञानेऽप्युपेक्षावदत्रापि तथा भवेत्। अन्यद् व्याख्याने स्फुटीभविष्यति।

भावोद्दीपकत्वमात्रत्वं कूजनधर्म इति तत्कार्ये सम्पन्ने तद्वर्णने जायमाने स्मरवेगजश्चित्तविक्षेपः प्रतिबन्धक उक्तः। कृष्णचेष्टितस्मरणं चाशक्तौ स्मरवेगे च हेतुरुक्तः। तद्धर्मेष्यावश्यकत्वात् सार्वदिकत्वाच्च वर्णनं न स्यादेवेतिशङ्कामपनुदन्नग्रे वर्णनायामुपपत्तिमाहैकेन बर्हापीडमित्यनेन। अत्रैवं ज्ञेयम्। सामीप-निषत्सु 'स्मरो वा आकाशाद् भूयस्तस्माद्यद्यपि बहव आसीरन्न स्मरन्तो नैव कञ्चन शृणुयुर्न मन्वीरन्न विजानीरन् यदा वाव ते स्मरेयुरथ शृणुयु'रित्यादिना स्मरणस्यैव स्मरशब्दवाच्यत्वमुच्यते। स्मरणं स्मर इतिव्युत्पत्तेः। प्रकृते स्वामिनीनां मुखारविन्देषु स्वाधरसुधासम्बन्धः प्रभुणाग्रिमप्रयोजनार्थमवश्यं कारणीयः। स च वर्णनेनैव भवति। तच्च न सुधासंवलितनादान्तःप्रवेशं विना भवितुमर्हति। तत्प्र-वेशेपि पूर्ववत् कृष्णचेष्टितस्मृतौ न तत् सम्भवति। अत एव नदीवेगस्येवान्याप्रतिबध्यत्वं स्मरणस्य ज्ञापयितुं स्मरवेगेनेत्यप्युक्तम्। अन्यथा न वदेत्। कृष्णचेष्टितं स्मरन्त्यो नाशकन्नेतावतैव चारितार्थ्यात्। अतो नादप्राधान्येनैव नादस्मरणं—तद्धेतुत्वेनैव च प्रभुस्मरणं न तु प्राधान्येन—चेत् तदा सर्वं सम्पद्यत इति स्वयं विचार्य पूर्वमतथाकृत्वापि तद्दर्शितं दृष्ट्वोक्तकार्यार्थमुद्बुद्धपूर्णशृङ्गाररसात्मक-मुद्बोधकाच्छादकविक्षेपकशक्तिमत्त्वेनाखिलाङ्गयुक्तमपि स्वरूपं नादेऽनुभूयमान[1]एवानुभूतं भवति न तु पृथगित्येवम्भूतं नादं सम्पाद्य शुद्धपुष्टिस्थानं प्राविशत् पुष्टिमार्गाङ्गीकारं प्रकटीकृतवान्। तथा सति ह्येतासां साक्षाद्भोगः सम्भवति। अन्यथैतावत्करणं निःप्रयोजकं स्यात्। यथा घन्दाङ्गीकारेण [illegible] निवारणं कृतवानेवमेतदङ्गीकारेणापि कीर्तिद्वारा विश्वस्य सर्वस्यैव दोषं दूरीकरिष्यतीति निदो[illegible] मप्यस्या लीलाया ख्यापयितुमन्ते विशेषणम्। एवं सति निःप्रत्यूहं रववर्णनमभूत्। अतो वर्णनाशक्ति-मुक्त्वा तत्साधनं मध्ये निरूप्यास्याग्रे तदुक्तम्। एतेन वेणुरवस्वरूपमेव वर्णितं भवति। अत एवेतिवेणुरवमित्येवात्र उक्तम्। तेन पूर्वस्माद्विलक्षणत्वं नादस्य ज्ञापितं भवति।

यथा पात्रस्थं रसं पाययितुमुद्यतस्तत्पात्रं हस्ते बिभ्रद् भवति पुरुषस्तथा स्वरूपात्मकं रसमेताभ्यो दातुमुद्यत इति ज्ञायत एतादृग्वपूरूपप्राकट्येनेति ज्ञापयितुं वपुर्बिभ्रदित्युक्तम्।

अथवा नटवरवपुरिति विशेष्यं पदम्। नटवरवपूरूपः प्राविशदितिसम्बन्धः। त्पदस्य बर्हापीडकर्णिकारवासोमालापदैः समं सम्बन्धः।

---

१-२-३-४-इदं स्वतन्त्रचतुष्टयं श्रीमत्प्रभुचरणप्रकटितं क्वचित्पुस्तकेषु श्रीसुबोधिन्यन्तःश्लिष्टं दृश्यते।

वाक्यार्थोऽत्र वर्णनीयः । न तु रूपमात्रम् । तथा सति रूपं वेणुनादः क्रीडा चेति त्रयं वर्णितं स्यादन्योन्यसम्बन्धे प्रकारविशेषश्च । एतादृशं वपुर्बिभ्रद्वेणो रन्ध्रान् पूरयन् वृन्दारण्यं प्राविशदितिसम्बन्धः । स्वरूपगुणलीला उक्ताः क्रमेणैव । बर्हो मयूरपिच्छं स एवापीडः शिरोभूषणं यस्य वपुषः । नृत्यन्मयूरानुकरणं चैतत् । स चोद्बुद्ध रस एव तथेति भगवतोऽप्युद्बुद्धरसात्मकत्वं सूचितं भवत्यनेन । अतो युक्तैवाशक्तिरितिभावः । नटवद् वरवच्च वपुः । रसो हि द्विविधः । धर्मसहितः केवलश्च । केवलो नाट्ये प्रसिद्धः । धर्मसहितः सम्भोगे । भगवतो वपुरुभयविधमप्यत उक्तं नटवद्वरवदिति । वरः मत्यग्रभोक्ता । भगवांस्तु हृदयेऽपि वर्तते । तावतापि ज्ञानिनामिव न तासां सुखमिति ज्ञापयितुं वपुषो भरणं निरूप्यते । न तु स एव तथा । कर्णयोः कर्णिकारकुसुमं यस्य । अलुक्सप्तमी । बिभ्रदिति वा सम्बन्धः । कर्णिकारस्तु शृङ्गारोद्बोधकः । शृङ्गारस्तु संयोगविप्रयोगभेदेन द्विविधः । श्रोत्रे तदुभयप्रतिपादके । तयोः कर्णिकारसम्बन्धेन पूर्वं निरूपितो रस उच्छलितो भवति । तादृशस्तु रसो गुप्त एव रसत्वमापद्यत इति पीताम्बरं वर्णयति कनककपिशं वासो बिभ्रदिति । उद्बुद्धे रसे गोपिका वासो न गणयेयुरिति व्यामोहककनकतुल्यता निरूपिता । कनकवत् कपिशं पीतमिति । माया हि सा । अतो यत्र वसनाकृतिरपि न सम्यगवलोकिता तत्र तेन वसनेनाच्छन्नं रसं कथमुद्घाटयेयुः ? ततोऽप्याच्छादिकामाह कीर्तिमयीं वनमालां वैजयन्तीञ्च मालां बि दिति । वै निश्चयेन सर्वजयप्रकाशिका वैजयन्ती । एवं रसद्वयं तदुद्बोध आच्छादकं विक्षेपकं च रूपे निरूपितम् ।

स्वस्वरूपातिरिक्तस्य वपुषोऽत्राभावात्तद्धरणोक्तिरसङ्गतेत्याशङ्क्य तत्तात्पर्यमाहुर्भगवांस्त्वित्यादिना । उक्तरीत्योद्बुद्धद्विविधरसात्मकं हि वपुः । रसश्च भावात्मकत्वात् स्वप्रियाव्यतिरिक्तेषु तादृशत्वस्याप्रकटनाच्चामूर्तत्वेन लोके प्रसिद्धः । वपुर्बिभ्राणस्तु बहिः स्वस्वरूपं प्रकटयन् भवति । तथायमपि कुर्वन् वृन्दारण्यं प्राविशदिति । अत्रैवं ज्ञेयम् । शब्दात्मकत्वेनामूर्तत्वेन लोके प्रसिद्धा अपि वेदा 'वेदा यथा मूर्तिधरास्त्रिपृष्ठे' इतिवाक्यात् त्रिपृष्ठे सार्वदिकशब्दब्रह्मात्मकमूर्तिप्राकट्यवन्तो यथा तथा ब्रह्मणः साकारत्वात् सार्वदिकमेव रसात्मकं वपुर्वृन्दारण्य एव प्रकटितवान् । हृद्येव प्राकट्ये तु मनोमात्रभोग्यत्वम् । बहिःप्राकट्ये सर्वेन्द्रियभोग्यत्वम् । एवं सति चक्षुराद्यविषयत्वे प्रियपदार्थस्य मनोमात्रविषयत्वं दुःखदमित्यनुभवसिद्धमतो भक्तार्थं तथेति । नत्विति । स एव भगवानेव । तथात्मभिन्नवपुषो भर्तेत्यर्थः ।

बर्हापीडेत्यत्र–आभासे ताभिर्वर्णयितुमशक्यं स्वयं वर्णयन्ति तथात्वज्ञापनायेति यदुच्यते तत्र वर्णनाशक्तिबीजभूतस्य स्मरवेगस्य तद्धेतुभूतस्य भगवत्स्मरणस्य चाग्रेऽपि सत्त्वात् पश्चात् कथं वर्णनशक्तिरित्याकाङ्क्षायां तामुपपादयितुं प्रभवः श्लोकासङ्गतिमुद्भाव्य वर्णनहेतुं स्वतन्त्रे प्रपञ्च्य स्फुटीकुर्वन्ति नन्वित्यादिना । एवं सतीति । वर्णनाशक्तिहेतोः स्मरणस्यापेक्षयाप्रत्यक्षत्वेन विद्यमानत्वे सति । तथा चाग्रिमश्लोकोक्तवर्णनाबाधसम्भवात् स्फुटैवासङ्गतिरित्यर्थः । नन्वित्यादि । तथा च कर्मनिश्चायकत्वेन श्लोकसङ्गतिरित्यर्थः । वर्णनाशक्तिहेतुं व्युत्पादयन्ति द्वितीये चेत्यादिना । अग्रिमकार्यार्थमिति । वर्णनार्थम् ।

वैजयन्तीं च मालामित्यस्याभासे ततोप्याच्छादिकामिति। विक्षेपस्यापि वस्तुयाथात्म्यज्ञानाच्छादक-मस्तीत्याशयेनेदमुक्तम्। अन्यथाऽभे विक्षेपकं च रूपे निरूपितमिति न वदेयुः।

बर्हापीडेत्यस्य स्वतन्त्रे-ननु चकारादयभावे कथमावृत्तिः शक्यवचनेतिशङ्कायामाशुत्वेत्यस्यावृत्तौ बीजमाहुर्गीतं हीत्यादि। तथा च श्रोतव्यभेदादेवावृत्तिः प्राप्यत इत्यर्थः। तदेव निरूपयन्ति यच्छ्रवणेत्यादिना। सङ्गतिसिद्धये कूजितवेणुगीतपदाभ्यां यद्वेणुगीतं कूजितानिरिति मङ्गीकृतं तत्र बीजमाहुस्तारतम्येनेत्यादि। यद्यपि श्रीमदाचार्यचरणोक्तेनैवाभासेन सङ्गतिः सिध्यति तथापि यदसङ्गत्युद्भावनतत्समाधी प्रभुभिः कृतौ तौ सङ्गतिबीजाविष्करणाय। तत्राप्येकवारं सङ्गतिबीजमुक्त्वा यत्पुनर्भावोद्दीपकेत्यादिना समर्थितं तन्नादस्वरूपपरिचायनायेति ज्ञेयम्। एवं सत्यशक्त्युत्पादके नादे प्रभोरेव प्राधान्येन हार्दानुभवान्नादस्य गुणभावात् स्मरोदयः। वर्णनीये च नादे प्रभोः सर्वत्राविर्भावः परं न नादगुणभावेनेति नादस्य प्राधान्यमिति तयोर्नादयोः स्वरूपं फलति।

धर्मसहित इति। स्वसमानाधिकरणा या स्वप्रयुक्ता क्रिया तद्विशिष्ट इत्यर्थः। केवल इति। स्वव्यधिकरणताद्दृक्तद्विशिष्टः। कनककपिशामित्यत्र सेति। कनककपिशेत्यर्थः।

ननु चकाराद्यभावे कथमावृत्तिः शक्यवचनेतिशङ्कायामाशुत्वेत्यस्यावृत्तौ बीजमाहुर्गीतं हीत्यादि। तथा च श्रोतव्यभेदादेवावृत्तिः प्राप्यत इत्यर्थः। श्रोतव्यभेदं निरूपयन्ति तच्छ्रवणेत्यादिना। अशक्तिं व्युत्पाद्य शक्तिं व्युत्पादयन्ति चिकीर्षितेत्यादिना। सिद्धमाहुरेवं सतीत्यादि। सङ्गतिसिद्धये कूजितवेणुगीतपदाभ्यां यद्वेणुगीतं कूजितानिरिति मङ्गीकृतं तत्र बीजमाहुस्तारतम्येनेत्यादि। पूर्वव्याख्याने स्मरवेगपदेन कामवेगो व्याख्यातस्तथा सति सर्वात्मभाववतीभिः कृतमेतद्वर्णनं न भविष्यतीतिशङ्का स्यादतस्तन्निरासार्थं स्वतन्त्रान्तरे स्मरवेगपदं प्रकारान्तरेण व्याकुर्वन्ति भावोद्दीपकेत्यादि ज्ञापितं भवतीत्यन्तम्। तेनाधिकारिभेदेनार्थद्वयमप्यभिप्रेतं ज्ञेयम्। किञ्च यद्यपि श्रीमदाचार्यचरणोक्तेनैवाभासेन सङ्गतिः सिध्यति तथापि यदसङ्गत्युद्भावनतत्समाधी प्रभुभिः कृतौ तौ सङ्गतिबीजाविष्करणाय। तत्राप्येकवारं सङ्गतिबीजमुक्त्वा यत्पुनर्भावोद्दीपकेत्यादिना समर्थितं तन्नादस्वरूपपरिचायनायेति ज्ञेयम्। एवं सत्यशक्त्युत्पादके नादे प्रभोरेव प्राधान्येन हार्दानुभवान्नादस्य गुणभावात् स्मरोदयो वर्णनीये च नादे प्रभोः सर्वथाविर्भावः परं न नादगुणभावेनेति नादस्य प्राधान्यमिति तयोर्नादयोः स्वरूपं फलतीत्यपि ज्ञेयम्। उपश्रुतौ चाकाशाद् भूय इत्यत्र विभक्तिलोपश्छान्दसः। अलोपे भूयान्। अर्थस्तु नियामकत्वादभ्यधिकत्वाच्चाधिक इति बोध्यः।

सुबोधिन्यां धर्मसहितं इति। स्वसमानाधिकरणा या स्वप्रयुक्ता क्रिया तद्विशिष्ट इत्यर्थः। केवल इति। स्वव्यधिकरणस्वप्रयुक्तक्रियाविशिष्टः। भगवांस्त्वित्यादेस्तात्पर्यं टिप्पण्यामुपपादयन्ति स्वस्वरूपेत्यादि। नन्वमूर्तत्वेन प्रसिद्धस्य मूर्तता प्रमाणं विना न ज्ञायातीति तदर्थं तामुपपादयन्त्यपि चैवमित्यादिना भक्तार्थं तथेति। रूपप्राकट्यम्। वपुर्भेदस्य तात्पर्यान्तरप्रभवः स्वतन्त्रान्तर आहुर्यथा पात्रस्थमित्यादि। व्याख्यानक्लेशनिरासार्थं स्वतन्त्रान्तरे प्रकारान्तरमाहुरथवेत्यादि। कनककपिशामित्यत्र सेति। कनककपिशेत्यर्थः। ततोप्याच्छादिकामित्यस्यार्थं टिप्पण्यामाहुर्विक्षेपस्येत्यादि। वैजयन्तीमालात्र न नवरत्नखचिता किन्तु पुष्पमयीति बोधयितुमाभासे वनमालापदम्। "आपादलम्बिनी माला वनमाला प्रकीर्तिते"ति वैजयन्त्या. पुष्पमयीत्वमुत्तरार्धे बलदेवतीर्थयात्रायां 'वैजयन्तीं स्वमालां श्रीधामाम्लानपङ्कजा'मिति मूले सुबोधिन्यां च स्फुटमिति न विमर्शप्रन्थविरोधः।

नामलीलारूपं वेणुनादं निरूपयति रन्ध्रान् वेणोरिति। रन्ध्रा वेणोः सप्त। सुधा त्रिविधा। देवभोग्या भगवद्भोग्या सर्वभोग्या च। तत्र हेतुर्लोभात्मकेघरे स्थापिता। तस्याः साक्षादनुभवो नोच्छिष्टेन सम्भवति। अतः श्रोत्रपेयैव सा। सा हि सर्वेषां भगवदीयत्वं सम्पादयति। आनन्द एव सा प्रकटा द्रवीभूता। ब्रह्मानन्दादप्यधिका। आनन्दसारभूता। सा न कथञ्चित् साधनतामापद्यते स्वतः। अतो नादब्रह्मणि तां योजयितुं नादोत्पत्तिस्थाने वेणौ तत्रापि तद्रन्ध्रेष्वमूर्तत्वात् पूरिता। न हि सा साक्षाद् वेणुमपि स्पृशति। वेणोरित्यसमासात्। वेणुमध्येपि सा न। अतो यदा नादस्तद्द्वारा गच्छति तदा तेन सम्बद्धा गच्छति। ततः कर्णद्वारा हृदये प्रविष्टा वर्णनायां मुखे समागच्छन्ती मुखमपि स्वभोगयोग्यं करोति। यावच्च रसपूरेण सोप्यंशो नान्तः प्रविशति तावदपि साक्षात् तद्भोगयोग्यता न भवति। एतदर्थमेव वर्णनम्। तद्रसप्रवेशे निरोधः सिद्धः। अतः स्वल्पतरो गोपेषु भोग्यगोपीव्यतिरिक्तासु सर्वेषु च। अत एव निरोधो भक्त्यनन्तरं निरूपितः। सुप्तयु-त्पन्नानां भोग एतत्पर्यवसायी। ततो विमोचनं स्वाश्रयप्रापणं च प्रत्यापत्तिः। अन्यथा सृष्टि-र्व्यर्था स्यात्। अयं पुनर्ब्रह्मानन्दभावे जाते तत्राप्याधिदैविकरूपे सम्पन्ने कस्म्या इव मुख्यो रसभोगः सम्भवति तदंशानां च क्रमेण। अतो निरोधो महाफलः। अतोत्र स्त्रियः प्रकरणान्ते निरूप्यन्ते। भगवद्भोगानन्तरमेव भगवान् भोग्यो भवति। अतोत्र शुकोपि मुख्यतया स्त्रिय एव वर्णयति। अग्निकुमाराणामप्यत एव स्त्रीत्वम्। न हि पुरुषोन्योपभोग्यो भवति स्वोप-भोग्यो वा। परं ज्ञात्वा पाने महान् रस इति भगवतोग्रेज्ञानोपदेशनिर्बन्धः। मुख्यप्रापणार्थं वा। दुःखदूरीकरणार्थं च। अत एवाग्रे आधिदैविकीं स्त्रियं प्रार्थयिष्यन्ति। अतो रूपेण वशीकृत्याधरामृतं पाययन् स्वच्छन्दतां सम्पादयति।

रन्ध्रान् वेणोरित्यत्र–गूढाभिसन्धिना हेत्वन्तरमप्याहुर्यावच्चेति। नादो हि रसात्मको धारावत् कर्णद्वारा हृदि प्रविष्टः। स एव भगवदीयसर्वेन्द्रियविषयकविविधरसभावनिर्झरैः पाथःप्रवाह इव पुष्टो रसपूररूपो जातो येन समानशीलव्यसनानां परस्परं तद्वर्णनरूपो बहिः प्रकटीभूत्। स च सार्वत्रिक इति। तत्र हृदयस्थितोधररसो मुख्याधररसस्यांश एवेति स सर्वासां हृदि स्थितः पर्यायेण सर्वासां हृदि प्रविष्टस्तदंनिर्वचनीयोत्कटभावोदयेन साक्षात्तदनुभवयोग्यता भवतीत्यर्थः। एवं सति यावदुक्तरीत्या सोंशो नान्तःप्रविशति तावदपि साक्षात् तद्भोगयोग्यता न भवतीति शेषग्रन्थो ज्ञेयः। एतदर्थमेवेति। रसपूरेण तदंशप्रवेशार्थमेवेत्यर्थः। अत्रैवाग्रेत एवेति। यतो विहितभक्तिमताप्ययं रसः फलत्वेन प्रार्थनीय एव तिष्ठति न तु तत्प्राप्त्यैवायं प्राप्तो भवत्यतो वंशद्वयसम्बन्धिभक्तिनिरूपणानन्तरं निरोधो निरूपित इत्यर्थः। एतदर्थैव तात्पर्यान्तरमप्याहुः सुप्त्युत्पन्नानामिति। भक्तानामितिशेषः। भोगो

रन्ध्रा वेणोः सप्तेति। तेन षड्गुणसहितधर्म्यव-भावका इतिभावः। प्रस्तुतछायाः सर्वोत्कृष्टत्वा-पाहुः सुधा त्रिविधेत्यादि। देवभोग्या दिव्य-त्वादिनिष्ठा ज्ञेया। टिप्पण्यां तर्हीति। जाते निरोधे तेनैव भगवत्कारितछपाद्भवे च सिद्ध इत्यर्थः। ये मुक्ता इत्यादि। तथा च 'मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थिति' रितिमुक्तिलक्षणेनान्यथारूपत्यागपूर्वकस्व-रूपव्यवस्थानस्य मुक्तिरवाङ्लीलार्थं सुप्तानां लीलोप-योगित्वेनैव रूपेण व्यवस्थानस्य मुक्तित्वेन स्वान्तः-

रन्ध्रा वेणोः सप्तेति। तेन षड्गुणसहितधर्म्यव-भावका इतिभावः। प्रस्तुतछायाः सर्वोत्कृष्टत्वापाहुः सुधा त्रिविधेत्यादि। देवभोग्या दिव्यत्वादिनिष्ठा ज्ञेया। सर्वेषु चेति। गवादिषु। यावच्चेत्यादिप्रयोजनं टिप्पण्यामाहुर्गूढेत्यादि। तर्हीति। जाते निरोधे तेनैव भगवत्कारितछपाद्भवे च सिद्ध इत्यर्थः। ये मुक्ता इत्यादि। तथा च 'मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यव-स्थिति' रितिमुक्तिलक्षणेनान्यथारूपत्यागपूर्वकस्वरूप-व्यवस्थानस्य मुक्तित्वाङ्लीलार्थं सुप्तानां लीलोपयोगि-

स्वच्छन्दतामाह गोपवृन्दैरिति । वृन्दायाः स्त्रिया अरण्यं प्राविशत् । सर्वे कार्यं कृत्वा स्वच्छन्दतां सम्पादितवान् । ननु जगति भक्तिर्न स्थापितेति कथं कृतकार्यता ? तत्राह स्वपदरमणमिति । स्वपदानां स्वचरणानां रमणं यत्र । धर्मस्थापनमाह गोपवृन्दैः सहेति । अवशिष्टसर्वपुरुषार्थस्थापनार्थमाह गीतकीर्तिरिति । गीता कीर्तिर्यस्येति । स्त्रीभावो गूढः पुष्टिमार्गे तत्त्वमितिकृष्णपदार्थः क्वचिद् विवृतः ॥ ५ ॥

भक्तिरसभोग इत्यर्थः । एतत्पर्यवसायीति । एतदप्राप्तौ तेषामपि सृष्टावुत्पत्तिर्व्यर्थेत्यर्थः । एतेनान्येषां कैमुतिकन्यायेनैव जन्मवैयर्थ्यं ज्ञापितं भवति 'नैष्कर्म्यमप्यच्युतभावे'त्यादिवाक्यैः । तर्ह्येवं फलस्य सिद्धत्वादग्रिमलीलाद्वयं व्यर्थमित्याशङ्क्य तत्तात्पर्यमाहुस्ततो विमोचनमित्यादि । ये मुक्ताः स्वान्तःस्थिता एव जीवा लीलार्थं सृष्टास्तेषां परमानुग्रहतो नित्यलीलामध्यपातिभक्तैः सहैतद्रसानुभवं कारयित्वा पुनः पूर्वभावसम्पत्तेरेव प्रत्यापत्तिपदार्थत्वात् । लोक एतद्रसप्रकटनस्य तात्पर्यं वदन्त आवश्यकतां चाहुरन्यथेति । अस्यैव परमपुरुषार्थत्वेन सृष्टिमध्ये यत्र कुत्रापि प्रकटनेनैव सृष्टेः सार्थकत्वम् । अन्यथा प्राणसम्बन्धरहितदेहसृष्टिवत् सा व्यर्था स्यादित्यर्थः । तदंशानामिति । महिष्यादीनामित्यर्थः । मुख्यप्रापणार्थं चेति । मुख्यः पुरुषोत्तमः । एतासां च स एवापेक्षित इति तस्यात्मत्वेन कथने स एव ज्ञापितो भवतीति तथा ॥ ५ ॥

स्थितत्वरूपमुक्तत्वभावान्मोचनमेकादशार्थः । 'आभासश्चे'तिवाक्यात् सृष्टिस्थितिप्रलया यतो जायन्ते ज्ञायन्ते च स आश्रयः । आधिभौतिकादिरूपत्रयवेत्ता वाश्रयः । स च भगवानेवेति लीलानुभावनोत्तरं पुनर्भगवद्रूपता या सा प्रत्यापत्तिर्द्वादशार्थ इति न स्कन्धद्वयवैयर्थ्यं नापि प्रस्तुतस्य परमफलत्वहानिर्नापि लक्षणवाक्यवैरूप्यं लक्षणापत्तिर्वेत्यर्थः । सृष्टिरिति । लीलासृष्टिरित्यर्थः । ननु यद्येतदप्राप्तौ सृष्टिवैयर्थ्यं तदा सृष्टौ सर्वेषामेवैतद्भोगः कुतो न दृश्यत इत्याकाङ्क्षायामस्यातिदुर्लभत्वं सुबोधिन्यामाहुरयमित्यादि । ननु यद्येवं तदा ब्रह्मानन्दप्राप्त्यभावान्महिष्यादीनामेतद्भोगो न स्यादित्यत आहुस्तदंशेत्यादि । तथा च तेषामपि केनचिद् द्वारेण ब्रह्मानन्दोत्तरमेव स इत्यर्थः । फलितमाहुरत इत्यादि । गमकमाहुरतो-ऽत्रेत्यादि । ननु निरोध एव जाते चेन्महाफलप्राप्तिस्तदा भ्रमरगीते वक्ष्यमाणा ज्ञानोपदेशलीला न युज्यत इत्यत आहुः परं ज्ञात्वेत्यादि ।

गोपवृन्दैरिति । अन्यथा व्यासङ्गेन कार्याधीनत्वे स्वच्छन्दता न स्यादितिभावः । भगवत्प्राकट्यं हि 'तथा परमहंसानां' 'यदा यदा हि धर्मस्ये'त्यादिवाक्यैर्भक्त्याधर्मयुक्तमिति तदस्थापने कृतकार्यत्वमसम्भावितमित्याशयेनाहुर्नन्वित्यादि । स्त्रीभाव इत्यादि । स्त्रीभावो गूढ इति पुष्टिमार्गे तत्त्वमिति क्वचित् स्वसमानशीलाद् कृष्णपदार्थो विवृतो व्याख्यातस्तेन मुख्यानां कामार्थमोक्षाणां स्थापनं कीर्त्यैवेति सिद्धमिति गौणानामपि स्थापनं तथैव तथेतिभावः ॥ ६ ॥

त्वेनैव रूपेण व्यवस्थानस्य मुक्तित्वेन स्वान्तःस्थितत्वरूपमुक्तत्वभावान्मोचनमेकादशार्थः । 'आभासश्चे'तिवाक्यात् सृष्टिस्थितिप्रलया यतो जायन्ते ज्ञायन्ते च स आश्रयः । आधिभौतिकादिरूपत्रयवेत्ता वाश्रयः । स च भगवानेवेति लीलानुभावनोत्तरं पुनर्भगवद्रूपता या सा प्रत्यापत्तिर्द्वादशार्थ इति न स्कन्धद्वयवैयर्थ्यं नापि प्रस्तुतस्य परमफलत्वहानिर्नापि लक्षणवाक्यवैरूप्यं लक्षणापत्तिर्वेत्यर्थः । सृष्टिरिति । लीलासृष्टिरित्यर्थः । ननु यद्येतदप्राप्तौ सृष्टिवैयर्थ्यं तदा लीलासृष्टौ सर्वेषामेवैतद्भोगः कुतो न दृश्यत इत्याकाङ्क्षायामस्यातिदुर्लभत्वं सुबोधिन्यामाहुरयमित्यादि । ननु यद्येवं तदा ब्रह्मानन्दप्राप्त्यभावान्महिष्यादीनामेतद्भोगो न स्यादित्यत आहुस्तदंशेत्यादि । तथा च तेषामपि केनचिद् द्वारेण ब्रह्मानन्दोत्तरमेव स इत्यर्थः । फलितमाहुरत इत्यादि । महाफल इति । महद् फलं यस्य तादृशः । गमकमाहुरतोऽत्रेत्यादि । ननु निरोध एव जाते चेन्महाफलप्राप्तिस्तदा भ्रमरगीते वक्ष्यमाणा ज्ञानोपदेशलीला न युज्यत इत्यत आहुः परं ज्ञात्वेत्यादि ।

गोपवृन्दैरिति । अन्यथा व्यासङ्गेन कार्याधीनत्वे स्वच्छन्दता न स्यादितिभावः । भगवत्प्राकट्यं हि 'तथा परमहंसानां' 'यदा यदा हि धर्मस्ये'त्यादिवाक्यैर्भक्त्याधर्मयुक्तमिति तदस्थापने कृतकार्यत्वमसम्भावितमित्याशयेनाहुर्नन्वित्यादि । स्त्रीभाव इत्यादि । स्त्रीभावो गूढ इति पुष्टिमार्गे तत्त्वमिति क्वचित् स्वसमानशीलाद् कृष्णपदार्थो विवृतो व्याख्यातस्तेन मुख्यानां कामार्थमोक्षाणां स्थापनं कीर्त्यैवेति सिद्धमिति गौणानामपि स्थापनं तथैव तथेतिभावः ॥ ६ ॥

१. टिप्पण्यां पुनः पूर्वभावेत्यस्यार्थः 'पुनर्भगवदि'त्यादिना निरूपितः ।

इति वेणुरवं राजन् सर्वभूतमनोहरम्।
श्रुत्वा व्रजस्त्रियः सर्वा वर्णयन्त्योभिरेभिरे ॥ ६ ॥

गोप्य ऊचुः।

अक्षण्वतां फलमिदं न परं विदामः सख्यः पशूननु निवेशयतोर्वयस्यैः।
वक्त्रं व्रजेशसुतयोरनुवेणु जुष्टं यैर्वा निपीतमनुरक्तकटाक्षमोक्षम् ॥ ७ ॥

अतः सर्वमेवोपसर्जनीभूतं वेणुनाद एव मुख्य इति तमेव वर्णयितुमारेभिरे गोप्य इत्याह इति वेणुरवमिति। इतिहेतोर्वेणुरवमेव वर्णयितुं वेणुरवमाकर्ण्य वर्णयितुमारेभिर इति-सम्बन्धः। तत्र प्रथमश्रवणे वर्णनार्थं श्रवणे च सादरं श्रवणं भवति। अमुना प्रकारेणोद्गतं वेणुरवं न तु केवलम्। राजन्निति सम्बोधनं तद्रसानभिज्ञत्वज्ञापनाय। अनेनापि स्पष्टोर्थो नोक्त इति ज्ञापितम्। तर्हि तत्र कथं प्रवृत्तिरित्याशङ्क्य प्रमेयबलादेव भविष्यतीत्यभिप्रायेणाह सर्वभूतमनोहरमिति। सर्वभूतानां मनोहरं स्वत एव मनोवशीकरणसमर्थम्। अतः सम्यक् श्रुत्वाभिरेमिरे। व्रजस्त्रिय इति कार्यान्तराभावः सूचितः। न हि व्रजस्त्रीणां पुरुषेषु वनं गतेषु सन्ध्यापर्यन्तमागमनसम्भावनारहितेषु प्रातरेव निवृत्तावश्यकेषु किञ्चित् कार्यमस्ति। अतः सर्वा एव वर्णयन्त्यः पौर्वापर्येणाभितो रेमिरे। दुःखात्मकं प्रपञ्चं विस्मृत्य परमानन्दविलासं कृतवत्यः। पूर्वं प्रथमश्रवणमात्रेण कामोद्दीपने चित्तविक्षेपादशक्तिरुक्ता। तत उक्तसुधायामन्तःपूर्णायामत्याधिक्येन परितो गलनरूपं वर्णनमिति पश्चात् तदुक्तम् ॥ ६ ॥

रसद्वयार्थं द्वितयं वेणुपूरणमेकतः।
स्वच्छन्दपादगमने हेतुश्चापि तथापरः ॥ १ ॥
चतुर्भिः पीठिकैवं स्यात् षड्भिर्वेणोस्तु वादनम् ॥ १½ ॥
द्वाभ्यां भक्तेः प्रतिष्ठा च दोषः स्याद् वर्णनेऽन्यथा ॥ २ ॥
वैपरीत्यात् समाधानमन्यथा स्यात् तु दूषणम् ॥ २½ ॥

तत्र प्रथमं यद् वर्णयितुमारब्धं तत्रासक्तौ शुकेन यद् वर्णितं चतुर्भिस्तद् वर्णयन्ति। तत्र प्रथमं स्वरूपतो रसात्मकं भगवन्तं वर्णयन्त्यक्षण्वतामिति।

अक्षण्वतामिन्द्रियवतां चक्षुष्मतां वा। इदमिति। स्वहृदये मनोरथप्रकारेण प्रतिभातम्

भगवता सह संलापो दर्शनं मिलितस्य च ॥ ३ ॥
आश्लेषः सेवनं चापि स्पर्शश्चापि तथाविधः ॥ ३½ ॥
अधरामृतपानं च भोगो रोमोद्गमस्तथा ॥ ४ ॥
तत्कूजितानां श्रवणमाघ्राणं चापि सर्वतः ॥ ४½ ॥
तदन्तिकगतिर्नित्यमेवं तद्भावनं सदा ॥ ५ ॥
इदमेवेन्द्रियवतां फलं मोक्षोपि नान्यथा ॥ ५½ ॥
यथान्धकारे नियता स्थितिर्नाक्ष्णोः फलं भवेत् ॥ ६ ॥
एवं मोक्षोपीन्द्रियादियुक्तानां सर्वथा न हि ॥ ६½ ॥
बाधकानां परित्यागे साधकानां न तद् भवेत् ॥ ७ ॥

---

१. अभिरेमिर इत्यपि साम्प्रदायिकः पाठः।

अक्षण्वतामित्यत्र प्रकरणार्थविभागे-द्वाभ्यां भक्तेरिति । लोके हीनानामपि चरणारविन्दसम्बन्धिकुङ्कुमसम्बन्धमात्रेण लक्ष्मीसमानभाग्यवत्त्वं चरणमाहात्म्यमेव स्पर्शमात्रेण प्रकृष्टमोदजनकत्वं च । चरणश्च भक्तिमार्गरूप इति तद्धर्मप्रकटनं भक्तिस्थानरूपमित्यर्थः । एवं तत्तात्पर्यानुक्तौ बाधकमाहुरन्यथेति । प्रकारान्तरेण तात्पर्योक्ताविस्यर्थः । पुरुषोत्तमस्य लोकेपि हीनायाः स्त्रियाः सम्बन्धोक्त्या हीननायकत्वमापद्येत । श्रीपतेः कन्दाद्युपयोगश्च तथा । अतस्तत्रैव तात्पर्यमितिभावः । तथापि लोकरीत्या दूषणत्वं तस्य भवत्येवेत्यत आहुर्वैपरीत्यात् समाधानमिति । प्रमेयमार्गः प्रमाणमार्गाद् विपरीतो बलिष्ठश्च । अधुना च स एव प्रकटीकृत इति वस्तुस्वाभाव्यादेव तथात्वमिति न दूष्यमितिभावः । अत्र मर्यादावैपरीत्यं भूषणमितिसारम् । मर्यादामार्गीयपरमोत्कर्षवद्भ्योप्युत्कर्षसिद्धेः सर्वमवदातम् । अन्यथा वैपरीत्यमात्रेण मार्गोत्कर्षो न सिध्येत् । सेन्द्रियाणामपि तदफलने हेतुमाहुर्बाधकानामिति। भगवदतिरिक्तस्य सर्वस्य बाधकत्वात् तत्त्यागे सति प्रतिबन्धकाभावेन मोक्षलक्षणं फलं न भवेदित्यर्थः । मुमुक्षूणां तथात्वेपि न तथात्वमित्याशङ्क्य तत्साधनमाहुः साधकानामिति । सर्वात्मभावेन भजनं साधकत्वम् । यद्यपि सर्वात्मभावेन सर्वत्यागोप्यन्तर्भवति तथाप्याधुनिकानां स्ववस्तद्भावरहितानां पूर्वं बुद्धिपूर्वकस्तत्त्याग एवद्भावनं चोपदिश्यत इति पृथगुक्तिः ।

अग्रिमाभासे-अत इति । वेणुनादस्य 'बर्हापीडे'तिवाक्यार्थोद्भावकत्वादित्यर्थः । सर्वमिति । पुरुषार्थपञ्चकम् । एवकारोप्यर्थे ॥ ६ ॥

अक्षण्वतामित्यत्र-त्रयोदशस्य पद्यस्य तात्पर्यमाहुर्वैपरीत्यादित्यादि । कारिकार्थस्तु टिप्पण्यामेव स्फुटः । सुबोधिन्यां रोमोद्गम इति । पायुफलमिदं ज्ञेयम् । तृतीयस्कन्धे 'पुलकोद्भिन्नसर्वाङ्ग' इत्यत्र प्रश्निसाध्याये 'एतद्रूपीकचपकै'रित्यत्र चाचार्यचरणैर्विवरणात् । मोक्षोपि नान्यथेति । केवलानां फलरूपत्वान्न तथेत्यर्थः । नन्वेकत्वस्य सर्वाधिकत्वात् तस्य कथं न फलत्वमित्याकाङ्क्षायां दृष्टान्तेनाहुर्यथेत्यादि । नन्विन्द्रियवैफल्यान्मोक्षस्य फलत्वं माभूत् परं स कुतो न भवतीत्यतष्टिप्पण्यामाहुः सेन्द्रियाणामित्यादि । तदफलन इति । मोक्षो फलं नेत्यर्थः । प्रतिबन्धकाभावेनेत्यादि । मुख्यफलानधिकारे हि मोक्षो भगवता दीयते । प्रकृते च मुख्यफलप्रतिबन्धकस्य सर्वात्मभावाभावस्य गतत्वेन मुख्यफलमेव सेन्द्रियाणां भवतीति न मोक्ष इतिभावः । नन्वस्त्वेवं तथापि साधारणाधिकारिणां कुतो न मोक्षः फलतीत्याशङ्कां हदिकृत्य कारिकायां साधकानामित्यस्य पदस्याभावेप्यर्थसिद्धेरेतद्वैयर्थ्याशङ्काञ्च हृदिस्थाहुर्मुमुक्षूणामित्यादि । पुष्टिमार्गीयमोक्षेच्छूनाम् । तथापि मुख्यफलबाधकापरित्यागे न तथा-

अग्रिमाभासे-अत इति । वेणुनादस्य 'बर्हापीडे'तिवाक्यार्थोद्भावकत्वादित्यर्थः । सर्वमिति । पुरुषार्थपञ्चकम् । एवकारोप्यर्थे । अमुनेत्यादि । इतिशब्दः संयोगपृथक्त्वेनार्थान्तरेणात्र युज्यत इत्याशयेनेदमुक्तम् । रवमिति । पूर्वं रशब्देनाग्निबीजेन दुःखं ततो वशब्देनामृतबीजेन सुखमिति विरहाग्निरधरामृतपानं च रवशब्देनोच्येते ॥ ६ ॥

अक्षण्वतामित्यत्र-वेणुपूरणमेकत इति तृतीयायां तसिल् । एकेन श्लोकेन वेणोरधरसुधया पूरणमित्यर्थः । एकत इत्यग्रेपि सम्बध्यते । एकेन ततोग्रिमेण । स्वच्छन्दपादगमने वृन्दावने विहारे हेतुर्भक्त्युद्रेकः । चकारात् पुष्टिलीला । अपिशब्दाधरणानां स्वरूपम् । अपरस्तथा । एतद् द्वयं तत्रैव हेत्वन्तरमित्यर्थः । पीठिकेति । प्रस्तोष्यमाणोपपादको हेत्वादिपरिकरः पीठिका । वर्णयन्तीति । फलत्वेन वर्णयन्ति । उदासीनत्वान्न फलतेति तन्निवर्तयितुमिदम्पदस्यार्थमाहुरिदमित्यादि । तथा चेदम्पदेन परामृष्टस्य 'बर्हापीडे'तिश्लोकोक्तस्वरूपस्य गानोपयिकसम्बन्धात् फलत्वमित्यर्थः । तदुपपादयन्ति कारिकाभिः । तथा च सङ्कल्प्यमानस्य भगवत एव फलत्वम् । एवं सर्वत्र बोध्यम् । त्रयोदशस्य पद्यस्य तात्पर्यमाहुर्वैपरीत्यादित्यादि । कारिकार्थस्तु टिप्पण्यामेव स्फुटः । सुबोधिन्यां रोमोद्गम इति । पायुफलमिदं ज्ञेयम् । तृतीयस्कन्धे 'पुलकोद्भिन्नसर्वाङ्ग' इत्यत्र प्रश्निसाध्याय 'एतद्रूपीकचपकै' रित्यत्र चाचार्यचरणैर्विवरणात् । तद्भावनमिति । धर्मविशिष्टरसात्मकभगवद्भावनम् । मोक्षोपि नान्यथेति । केवलानां फलरूपत्वान्न तथे-

तदाह न परं विदाम इति। परो मोक्षः सायुज्यादिः। नन्वा"त्मलाभान्न परं विद्यत" इतिश्रुतेः कथं न परस्य पुरुषार्थत्वम्? तदाहुर्विदाम इति। वयमप्युपनिषद्रूपाः। अतो वयमेवं जानीमः। न ह्यनुभवविरुद्धमननुभवापर्यवसायि फलं श्रुत्युक्तं भवति। ततः केवलानां तदेव फलमिन्द्रियवतां त्वेतदितिव्यवस्थितविकल्पः। अस्मिन्नर्थे श्रुत्यन्तररूपाणां गोपिकानां सम्मतिमाहुर्हे सख्य इति। समानशीलव्यसन एव सख्यपदप्रयोगात्। अतः श्रुत्यन्तरसम्मतिरप्युक्ता। एतत् कासाञ्चिद् गोपिकानामेव भवतीति सर्वेषां साधारणं पक्षमाहुरक्षुण्मतामिति। अस्मिन् पक्षेक्षण्वत्पदं चक्षुष्मत्पदपरं ज्ञेयमस्याप्यावृत्तिर्वा ज्ञेया।

ह्यं न मोक्षमार्गित्वमित्याशङ्क्य तत्साधनं मुख्यफलसाधनं तेष्वस्तीत्याहुरित्यर्थः। उपदिश्यत इति। भगवतोपदिश्यत इत्यर्थः।

त्यर्थः। अन्यशानक्रियाभावेनेन्द्रियवैफल्यान्न फलमित्यर्थः। नन्वेकत्वस्य सर्वाधिकत्वात् तस्य कथं न फलत्वमित्याकाङ्क्षायां दृष्टान्तेनोपपादयन्ति यथेत्यादि। नन्विन्द्रियवैफल्यान्मोक्षस्य फलत्वं मास्तु परन्तु 'हतात्मनो हृतमाणांश्च भक्तिरनिच्छतो गतिमण्वीं प्रयुङ्क्ते' इतिवाक्येन तस्यावश्यप्राप्तेः स कुतो न भवतीत्यत आहुः सेन्द्रियाणामित्यादि। तद्फलन इति। मोक्षाफलने। प्रतिबन्धकाभावेनेत्यादि। मुख्यफलानधिकारे मोक्षो भगवता दीयते प्रकृते च मुख्यफलप्रतिबन्धकस्य सर्वात्मभावाभावस्य गतत्वेन मुख्यफलमेव सेन्द्रियाणां भवतीत्यधिकारिभेदान्न मोक्ष इति भावः। एतेनैवोक्तवाक्यविरोधोपि परिहृतो बोध्यः। नन्वस्त्वेवं तथापि साधारणाधिकारिणां कुतो न मोक्षः फलतीत्याशङ्कां हृदिकृत्य कारिकायां साधकानामित्युक्त्य परस्याभावेप्यर्थसिद्धेरेतद्वैयर्थ्याशङ्कां हृदिकृत्याहुर्मुमुक्षूणामित्यादि। पुष्टिमार्गीयमोक्षेच्छूनाम्। तथात्वेपि। इन्द्रियवत्त्वेपि। न तथात्वम्। न प्रतिबन्धकाभाववत्त्वमितिहेतोस्तेषां मोक्षफलमाशङ्क्य तेष्वपि विवक्षितफलसाधनमाहुरित्यर्थः। साधनं व्युत्पादयन्ति सर्वात्मभाव इत्यादि। अत्रेदं बोध्यम्। सर्वात्मभावो नाम सर्वेषामात्मनो भावो विद्यमानतावियोगो येन भावी तादृशो वियोगानुभवः। सा च भक्तेः परमा काष्ठा। यद्यपि तादृग्भावे सति भगवदतिरिक्तस्यानः स्फुरण एवायातीति तस्मिन्नेवान्तर्भवति तथाप्याधुनिकानां स्वतस्तद्भावरहितानां तृतीयस्कन्धे द्वात्रिंशाध्याये 'तस्मात् त्वं सर्वभावेन भजस्व परमेष्ठिन'मित्यस्य सुबोधिन्यां 'देहमारभ्येश्वरपर्यन्तं यावन्तो भजनीया येर्भविष्य ते सर्वे भावा भगवत्येव कर्तव्य इति सर्वभाव' इति कपिलदेवैः प्रथमकक्षायामुपदिश्यत इति अस्मिन् पक्ष आत्मनि भाव आत्मभावः सर्वथासावात्मभावश्चेति सर्वात्मभाव इति सिध्यति। तथा सति तत्क्रतुन्यायेनाग्रेपि तदेव फलतीति प्रथमकक्षावतां साधकानामपि न मोक्षफलनमतो नापि साधकपदवैयर्थ्यमित्यर्थः। उपदिश्यत इति। भगवतोपदिश्यतं।

१ एवमित्यपि पाठः।

पशूननु । पशूनां पश्चाद्भागे । वयस्यैः सह वनं पशून् निवेशयतो रामकृष्णयोर्वक्त्र-मेकं यैर्वा निपीतमिति । वेत्यनादरे । मुख्यापेक्षयेदं गौणमिति । ये तु कालेन तुल्यास्तैः सह पशूनेतद्रसानभिज्ञान् वनं प्रवेशयति भगवान् । निर्गुणावस्थाधिकाराभावे सात्त्विकावस्थाया युक्तत्वात् । भगवतो लीलायां कालो निमित्तं गोपानां लीलायाश्च तदाधारत्वे निमित्तमिति वयस्यता । तदा तैः पशूनां वने निवेशनम् । तैः सह वा समानकालैर्वने निवेशनम् । भगवतो वा सहभावः । तथा सति वननिविष्टानां पशूनामपि गोपानां तच्छ्रमे तत्स्थाने निवेशनार्थम् । आविष्टस्य मुखारविन्दं न स्पष्टमिति भगवत एव मुखमुभयरूपस्यापि मुखं चक्षुर्द्वारा यैरन्तः प्रवेशितं "तत् सर्वव्यापकं चित्तमाकृष्यैकत्र धारयेत् नान्यानि चिन्तयेद् भूयः सुस्मितं भावयेन् मुख" मितिवाक्यात् । किञ्च । एता हि स्वहृदि भावितं निरूपयन्ति । तथा च साधारणपक्षत्वेन सामान्यतो बलभद्रस्य निरूपणेपि मुखनिरूपणप्रस्तावेऽन्यमुखमेतासां हृदि नायातीत्येक-मेव तत् निरूपितम् । मुखस्यैकत्वं प्रतिपादयन्त्य ईश्वरत्वेनाराधनबुद्धयानुरोधबुद्धया वा येषां पानं तत्सापेक्षमित्यनादरे हेतुमाहुर्व्रजेशसुतयोरिति । न हि बलभद्रो व्रजेशस्य पुत्रः । आवेशपक्षे तु कृष्ण एवाविशतीति युक्तमेव तयोर्व्रजेशसुतत्वम् । अनादरे लौकिकसापेक्षदर्शनं हेतुः । अन्ये पुनर्गीतरसाभिज्ञा वेणुनादश्रवणार्थं भगवन्मुखारविन्दं पश्यन्ति तदाहानुवेणु जुष्ट-मिति । वेणुमनु लक्षीकृत्य यद् वर्तते तदनुवेणु वेणुवादनपरं तद् यैर्जुष्टं यैर्वा निपीतमिति । सेवनं निदर्शनम् । पानमन्तःप्रवेशनम् । केवलं शब्दग्रहणं मनोहरत्वाच्छिद्रार्थं वेतिविकल्पः । अनादरस्तु स्वरादेवायाति । एवं मनोहरत्वाश्चाद्याविष्टत्वाद् वा भजनमुक्तम् । कामसम्बन्धादपि भजनं पाक्षिकमिति विशेषणान्तरमाहानुरक्तकटाक्षमोक्षमिति । अनुरक्तानां कटाक्षाणां मोक्षो यत्र । एतच्च चक्षुष्मतां फलमिति निर्गुणसगुणभेदा निरूपिताः ॥ ७ ॥

अत्रैव वयस्यैरित्यत्र—तदाधारत्वे निमित्तमितीति । गोपलीलयोरेककालाधारत्वे प्रमुमाकृत्वं निमित्तमिति तथेत्यर्थः ॥ ७ ॥

सुबोधिन्यां चक्षुष्मत्फलमिति । चक्षुष्मत्पदार्थक-मित्यर्थः । भगवतो वा सहभाव इति । वयस्यैः सह निवेशयतीति तेषां भगवत्सहभाव इत्यर्थः । इममेवार्थं विवरीतुं सहभावप्रयोजनमाहुस्तथा सती-त्यादि । अन्तःप्रवेशितमिति । साधारणपक्षे तदेव फलमित्यर्थः । ईश्वरत्वेनेति । स्वधामाधिपति-त्वेनेत्यर्थः । अनादर इति । बलदेवानादरे । तथा च ते भक्तेषु गुणरसेन पश्यन्ति न तु स्वभक्तत्वेनात्मन्येत्यर्थः । सुखमैश्वर्योरसारस्वादनमाहुर्नहीत्यादि । सापेक्षदर्शन इत्य-नन्यत्वनादरस्याहेति । साधन्देशिते सति गीता-भिज्ञत्वस्य साधारण्यं कथमादरणीयमत आहुः स्वरादिति । कालोऽन्यर्थः । निर्गुणसगुणभेदा इति । निर्गुणसहिताः सगुणभेदाः सात्त्विकाद्या इत्यर्थः । अत्रैवाद्भुतरसमार्धाश्रयत्वतो घरत्साधी निरुन इति केचन ॥ ७ ॥

सुबोधिन्यां चक्षुष्मत्पदपरमिति । चक्षुष्मत्पदा-र्थं मित्यर्थः । तेनेत्यादि । तेनार्थान्तरेणान्यदा 'ब्रजस्त्रिय' -इतिवाक्यस्य सर्वोपयोगाय एकवाक्यता निर्णेया । अर्थान्तर-महत्त्वादि बीजमाहुर्येन्यादि । यदि मुख्यपक्षोऽत्र नाभि-प्रेत स्यात् तदा प्यार्द न गदेदुरत्नन्थेत्यर्थः । पशूनां वनप्रवेशनसमये तात्पर्यमाहुर्निर्गुणेत्यादि । तदाधार-कस्य इत्यत्र तत्पदं भिन्नमिति बोधयितुं गोपानामित्या-देरर्थं निरूपणमाहुर्गोपेत्यादि । सुबोधिन्यां भग-वतो वा सहभाव इति । वयस्यैः सह निवेशयतीति तेषां भगवत्सहभाव इत्यर्थः । इममेवार्थं विवरीतुं सह-भावप्रयोजनमाहुस्तथा सतीत्यादि । तच्छ्रमे तत्स्थाने नि-वेशनस्य तात्पर्यमाहुरनाविष्टस्येत्यादि । अन्तःप्रवेशित-मिति । साधारणपक्षे तदेव फलम् । ईश्वरत्वेनेति । स्वधामाधिपतित्वेनेत्यर्थः । योगेन तयोः तत्सादित्यर्थः । अनादरस्यापि स्वबोधनार्थं मुखैकत्वनिरूपणस्य तात्पर्यं

**चूतप्रवालबर्हस्तबकोत्पलाब्जमालानुपृक्तपरिधानविचित्रवेषौ ।**
**मध्ये विरेजतुरलं पशुपालगोष्ठ्यां रङ्गे यथा नटवरौ क्व च गायमानौ ॥ ८ ॥**

केवलं रसरूपमाह चूतेति ।

चूतानामाम्राणां प्रवालाः कर्णयोः । बर्हस्तबकाः । बर्हगुच्छानि शिरसि । उत्पलाब्जानां माला कण्ठे । तैरनुपृक्तं मिलितं परिधानं पीताम्बरादिवस्त्राणि तैर्विचित्रो वेषो ययोः । एतादृशावुभावपि पशुपालगोष्ठ्यां मध्ये विरेजतुः । रसाभिनयेवतारवदेवावेशस्याप्युपयोगाद् द्विवचनम् ।

गुणा माया च वेषार्थमुपयुक्ता भवन्ति हि ।
अतो रसस्याभिनये चत्वारोर्था निरूपिताः ॥ १ ॥
रसरूपसुगन्धानां प्रतिष्ठा त्रिषु निश्चिता ।
धर्म्याच्छादनबोधाय मायाप्यत्र निरूप्यते ॥ २ ॥
वस्तुनिर्देशमात्रेण श्रोतॄणां काव्यवद् रसः ।
रसवत्फलबोधाय प्रथमं पल्लवो मतः ॥ ३ ॥
शास्त्रार्थस्य परिज्ञानाद् भावस्य कलिका भवेत् ।
ततस्तस्य च वैचित्र्यं पुष्पस्थानमिहोच्यते ॥ ४ ॥
अहोरात्रं वासना स्यात् तत आच्छादनं स्मृतम् ।
रसोत्पत्त्यर्थमेतावन् निरूपितमितिस्थितिः ॥ ५ ॥
आविर्भावे रसास्वादान् नृत्यं शोभा ततो भवेत् ।
अतोतिगुप्तो भगवान् रसत्वं प्रतिपद्यते ॥ ६ ॥

विचित्रवेषाविति सर्वरसाभिनिवेशनार्थम् । त्रयाणामन्योन्यगुणप्रधानभावे नव रसा भवन्ति । एवं रसरूपं भगवन्तं निरूप्य तद्रसपोषकौ समाजे वाद्यगीतविशेषौ निरूपयति

चूतप्रवालेत्यत्र–त्रयाणामन्योन्यगुणप्रधानभाव इति । स्थायिभावव्यभिचारिभावविगाढभावानामित्यर्थः ॥ ८ ॥

न्तरमाहुः किञ्चेत्यादि । तत्सापेक्षमिति । भगवत्सापेक्षम् । अनादर इति ।[1] फलत्वेनानादरे । तथा च ता बलदेवं व्रजेशसुतत्वेन पश्यन्ति न तु स्वफलत्वेनातस्तथेत्यर्थः । तदुपपादयन्तो मुख्यस्यैकस्योपपादनायाहुर्न हीत्यादि । ननु यद्येवं तर्हि फलत्वेनानादरे को हेतुरित्यत आहुरनादर इत्यादि । चक्षुष्मद्भ्योपि हीनाधिकारिण आहुरन्य इत्यादि । वाक्यद्वेन्विवे सति गीताभिन्नत्वफलस्य साधारणत्वं कथमायास्यतीत्यत आहुरनादर इत्यादि । स्यरादिति । कामोरित्यर्थः । कामेनातोपि हीनाधिकारिणो वक्तुमाहुः कामेत्यादि । निर्गुणसगुणभेदा इति । निर्गुणसहिताः सगुणभेदाः सात्त्विकाद्या इत्यर्थः । अनेनानुभूतवाक्यार्थविषयभूतो यत्पदार्थो त्रिवृत इति ज्ञेयम् । अत्र चक्षुष्मत्फलत्वेन निरूपिता कान्ताधिकहरिलीलेति प्रतिभाति ॥ ७ ॥

---

१. अनादर इत्यर्थः । २. बर्हापीडमितिवाक्यार्थानयनेत्यर्थः

मध्ये विरेजतुरिति। पशुपालानां गोष्ठी नात्यन्तं गूढा। तेन रसस्य सुलभत्वं निरूपितम्। मध्ये गीतवाद्ययोः। त्रयाणां समानतैव सर्वोत्तमा। नृत्यस्य तु विशेषः मायिक एवेति तदेवोक्तम्। कादाचित्कनिषेधार्थमलमिति। शास्त्रमत्र नियामकं न भविष्यतीत्याशङ्क्याह दृष्टान्तं रङ्गे यथा नटवराविति। रङ्गः शास्त्राधारभूतं स्थानम्। रङ्गमण्डपे यथा नटौ शास्त्रार्थानुसारिणौ भवतः। अलौकिकनाट्यार्थं वरपदम्। एवं राजसभावनृत्यमुक्त्वा सात्त्विकभावनृत्यमाह क्व च गायमानाविति। देशविशेषे हस्ताभिनयमात्रपूर्वकं श्रमरहितं गानं कुरुतः। एतदपि लोकप्रसिद्धम्॥८॥

चूतप्रवालेत्यत्र—वरपदातिरिक्तं पूर्वार्धमनेन विनीयत इत्याशयेनाहुश्चूतानामित्यादि। तेन कर्णिकारोपरि पल्लवा अपि स्थापिताः सन्तीति बोध्यम्। वैजयन्ती च कमलानां बोध्या। अवतारवदित्यादि। यथावतारे भूभारहरणादिना भगवत्प्रियकर्तृत्वेनोपयोगस्तथा रसाभिनये सहस्थितिप्रशंसादिभिः प्रियकर्तृत्वादुपयोग इति तथेत्यर्थः। ननु केवले रसे निरूपणीये पल्लवादीनां कुत्रोपयोग इत्यत आहुर्गुणा माया चेत्यादि। अत्रैवं ज्ञेयम्। 'नाट्यशब्दो रसे मुख्यो रसाभिव्यक्तिकारणं चतुर्धाभिनयोपेतं लक्षणावृत्तितो बुधैः नर्तनं नाट्यमित्युक्त'मिति सङ्गीतरत्नाकरे नाट्यशब्दार्थकथनात् तन्मूलभूतार्षग्रन्थेष्वप्ययमेवार्थ इति ज्ञायते। तत्र यदा रूढत्वेन मुख्यता तदा'ऽप्यन्यायश्चानेकशब्दत्व'मिति जैमिनीयसूत्रस्यैकस्यार्थस्यैकशब्दवाच्यत्वनियमावधारणाद् धर्मविशेषपर्यवसानस्यैव ज्यायस्त्वेन नर्तनाभिव्यङ्ग्यत्वदशापन्नत्वविशिष्टरसवाचकत्वमिति सिध्यति। नर्तनेपि यदा नटस्य भावः कर्म वा नाट्यमिति योगो विचार्यते तदापि ष्यञो भावे कर्मणि च विधानाद् योगतौल्यं तथापि रससत्तां विना तथा कर्मणः प्रयोक्तुमयुक्तत्वात् तत्प्रयोजको भाव एव मुख्यः। कर्मणि तु सामान्यतः प्रवृत्तः प्रत्ययो योगविशेषवत्तया रसाभिव्यञ्जके तस्मिन् कर्मणि सङ्कोच्यत इति मर्तव्येर्थे नाट्यशब्दो लक्षणागर्भ एव। एवमुभयथापि नाट्यशब्दविचारे रसस्य नृत्याभिव्यङ्ग्यत्वं सिद्धम्। किञ्च 'नटकथितवाक्यार्थपदार्थाभिनयात्मकं' नाट्य'माङ्गिकाभिनयैरेव भावानेव व्यनक्ति यत् तन् नृत्यं मार्गशब्देन प्रसिद्धं नृत्यवेदिनां गात्रविक्षेपमात्रं तु सर्वाभिनयवर्जितम् आङ्गिकोक्तप्रकारेण नृत्तं नृत्तविदो विदु'रिति नर्तनस्य भेदत्रयं तत्रोक्तम्। तथा 'स त्वत्राभिनयो भवे'दित्युपक्रम्य 'काव्यबद्धं विभावादि व्यञ्जन् योऽर्थो नटे स्थितः सामाजिकानां जनयन् निर्विघ्नरससंविद'मित्यभिनयं लक्षयित्वा 'ङ्गिको वाचिकस्तद्वदाहार्यः सात्त्विकोऽपरः चतुर्धाभिनयस्तत्राङ्गिकोऽङ्गैः सम्प्रदर्शितः वाचा विरचितः काव्यनाटकादिस्तु वाचकः आहार्यो हारकेयूरकटकादिविभूषणं सात्त्विकः सात्त्विकैर्भावैर्भावुकेन

चूतप्रवालेत्यत्र—वरपदातिरिक्तं पूर्वार्धमनेन विनीयत इत्याशयेनाहुश्चूतानामित्यादि। तेन कर्णिकारोपरि पल्लवा अपि स्थापिताः सन्तीति बोध्यम्। वैजयन्ती च कमलानां बोध्या। ननु केवले रसे निरूपणीये 'बर्हापीडं नटवरवपु'रिति श्लोकोक्तवरपदातिरिक्तस्यैकत्वादुभयबोधकद्विवचनस्य किं प्रयोजनमित्यत आह रसाभिनय इत्यादि। अवतारवदिति। यथावतारे भूभारहरणादिना भगवत्प्रियकर्तृत्वेनोपयोगस्तथा रसाभिनये सहस्थितिप्रशंसादिभिः प्रियकर्तृत्वादुपयोग इति तथेत्यर्थः। पल्लवादिनिरूपणप्रयोजनं कारिकाभिराहुर्गुणा माया चेत्यादि। अत्रैवं ज्ञेयम्। 'नाट्यशब्दो रसे मुख्यो रसाभिव्यक्तिकारणं चतुर्धाभिनयोपेतं लक्षणावृत्तितो बुधैः नर्तनं नाट्यमित्युक्त'मिति सङ्गीतरत्नाकरे नाट्यशब्दार्थकथनात् तन्मूलभूतार्षग्रन्थेष्वप्ययमेवार्थ इति ज्ञायते। अत्र रसे योगोऽप्यस्ति नटितुमभिनेतुं योग्यं नाट्यमिति। अर्हे कृत्यस्य यतो भवनात्। तेन योगरूढः। एवञ्चा'ऽन्यायश्चानेकशब्दत्व'मिति जैमिनीयसूत्रस्यैकस्यार्थस्यैकशब्दवाच्यत्वनियमावधारणाद् धर्मविशेषपर्यवसानस्यैव ज्यायस्त्वेन नर्तनाभिव्यङ्ग्यत्वदशापन्नत्वविशिष्टरसवाचकत्वमिति सिध्यति। नर्तनेपि यदा नटस्य भावः कर्म वा नाट्यमिति योगो विचार्यते तदापि ष्यञो भावे कर्मणि च विधानाद् योगतौल्यं तथापि रससत्तां विना तथा कर्मणः प्रयोक्तुमयुक्तत्वात् तत्प्रयोजको भाव एव मुख्यः। कर्मणि तु सामान्यतः प्रवृत्तः प्रत्ययो योगविशेषवत्तया रसाभिव्यञ्जके तस्मिन् कर्मणि सङ्कोच्यत इति मर्तव्येर्थे नाट्यशब्दो लक्षणागर्भ एव। एवमुभयथापि नाट्यशब्दविचारे रसस्य नृत्याभिव्यङ्ग्यत्वं सिद्धम्। किञ्च 'नटकथितवाक्यार्थपदार्थाभिनयात्मकं' नाट्य'माङ्गिकाभिनयैरेव भावानेव व्यनक्ति यत् तन् नृत्यं मार्गशब्देन प्रसिद्धं नृत्यवेदिनां गात्रविक्षेपमात्रं तु सर्वाभिनयवर्जितम् आङ्गिकोक्तप्रकारेण नृत्तं नृत्तविदो विदु'रिति नर्तनस्य भेदत्रयं तत्रोक्तं तथा 'स त्वत्राभिनयो भवे'दित्युपक्रम्य 'काव्यबद्धं विभावादि व्यञ्जन् योऽर्थो नटे स्थितः सामाजिकानां जनयन्

१. दर्शितो मन इत्यपि पाठः।

विभावित' इति च तत्रोक्तम् । तेनैवम्प्रयोगे रसस्याभिव्यक्तिः । रसश्च विभावादिभिः प्रकृष्यमाणः स्थायिभावात्मामूर्तो नालम्बनविभावमन्तरेणाभिव्यक्तुमर्हति । एवं सति तस्मिन् धर्माविभविणैव कैवल्यं त्यजन् नाट्यरूपतां जहातीत्युभयसामञ्जस्याय नटवेषात्मकैराहार्याभिनयैरालम्बनत्वारोपणेनाङ्गिकादिभिस्त्रिभिः सामाजिकानां रससंविज्ञननम् । यत्र पुनरालम्बनस्यैव नटत्वं तत्रापि नाट्यदशायां मुख्यानां रसधर्माणामनाविष्कारेण न्यग्भूतैवालम्बनता । तादृशत्वमजानतः प्रत्यारोपिता च । एवं प्रकृते ब्रह्मात्मकस्य रसस्य पूर्वोक्तरीत्या स्वप्रतिष्ठत्वालम्बनतयोरविरोधेपि यथा रसत्वं न्यग्भाव्यालम्बनताया एव क्वचित्प्रकटनं तथात्र तां न्यग्भाव्य नटत्वं प्रकटीकृत्य 'रसो वै स' इतिश्रुत्युक्तं हि स्वस्वरूपात्मकं रसं सङ्गीतशास्त्रोक्तप्रणाल्याभिनयतीति तत्र गुणाद्युपयोगस्तेनैते पल्लवादयोर्था उक्ता इत्यर्थः । तर्हि गुणा एव निरूप्या न गुणिन इत्यत आह रसेत्यादि । धर्म्याच्छादनबोधायेति । धर्मी रसस्तस्य गुप्ततावोधनाय । तथा च पल्लवादिषु तेषां प्रतिष्ठा निश्चितेति ते निरूपिताः । केवलगुणनिरूपणे तेषामागन्तुकता स्यादिति तथेत्यर्थः । उक्तार्थबोधनाय 'मायापि निरूप्यत इत्यर्थः । ननु रसप्रतिष्ठा चूतस्य फले न तु पल्लव इति नास्योपयोगः कथञ्चिदुपयोगे वा हस्तकेन पल्लवादिरप्यभिनेयो न तु वेषेपि स्थाप्य इत्यत आहुर्वस्तुनिर्देशेत्यादि । नाट्ये हि न रासन आस्वादः किन्तु काव्येन शब्दद्वारैवात्र चाक्षुषद्वारा मानस आस्वादः । तथा च चूतपल्लवेन रसवत्फलं भावीति स्वद्वारा बोध्यत इति तेन मानसिकास्वादसिद्धिरिति रसप्रतिष्ठा तत्रापि न दुर्घटेति पल्लव उचित एव । तस्य हस्तेनाभिनय उक्तरीत्या मानसमात्रं न तु रसवत्फलपर्यवसायित्वबोधनमपीत्यतस्तत्स्थापन-

निर्विघ्नरससंविद' मित्यभिनयं लक्षयित्वा'ङ्गिको वाचिकस्तद्वदाहार्यः सात्विकोपरः चतुर्धाभिनयस्तत्राङ्गिकोङ्गैः सम्प्रदर्शितः वाचा विरचितः काव्यनाटकादिस्तु वाचिकः । आहार्यो हारकेयूरकटकादिविभूषणं सात्विकः सात्विकैर्भावैर्भावुकेन विभावित' इति च तत्रोक्तम । एवं चतुर्धाभिनयमध्ये य आहार्याभिनयो वेषात्मा तदर्थं गुणा रसरूपसुगन्धा माया परिधानस्था 'कनककपिशता' च हि यतो हेतोरुपयुक्ता भवन्त्यतो हेतो रसस्याहार्येभिनये निरूपणीये चत्वारः पल्लवादयः परिधानान्ताः पदार्था निरूपिताः । यत एवम्प्रयोगे रसस्याभिव्यक्तिः । रसश्च विभावादिभिः प्रकृष्यमाणः स्थायिभावात्मामूर्तो नालम्बनविभावमन्तरेणाभिव्यक्तुमर्हति । एवं सति तस्मिन् धर्माविभविणैव कैवल्यं त्यजन् नाट्यरूपतां जहातीत्युभयसामञ्जस्याय नटवेषात्मकैराहार्याभिनयैरालम्बनत्वारोपणेनाङ्गिकादिभिस्त्रिभिः सामाजिकानां रससंविज्ञननम् । यत्र पुनरालम्बनस्यैव नटत्वं तत्रापि नाट्यदशायां मुख्यानां रसधर्माणामनाविष्कारेण न्यग्भूतैवालम्बनता । तादृशत्वमजानतः प्रत्यारोपिता च । एवं प्रकृते ब्रह्मात्मकस्य रसस्य पूर्वोक्तरीत्या स्वप्रतिष्ठत्वालम्बनतयोरविरोधेपि यथा रसत्वं न्यग्भाव्यालम्बनताया एव क्वचित्प्रकटनं तथात्र तां न्यग्भाव्य तामप्रकटीकृत्य नटत्वं प्रकटीकृत्य "रसो वै स" इतिश्रुत्युक्तं हि स्वस्वरूपात्मकं रसं सङ्गीतशास्त्रोक्तप्रणाल्याभिनयतीति तत्र गुणाद्युपयोगस्तेनैते पल्लवादयोर्था उक्ता इत्यर्थः । तर्हि गुणा एव निरूप्या न गुणिन इत्यत आह रसेत्यादि । धर्म्याच्छादनबोधायेति । धर्मी रसस्तस्य गुप्ततावोधनाय । तथा च पल्लवादिषु तेषां प्रतिष्ठा निश्चितेति ते निरूपिताः । केवलगुणनिरूपणे तेषामागन्तुकता स्यादिति तथा । उक्तार्थबोधनाय मायापि निरूप्यत इत्यर्थः । ननु रसप्रतिष्ठा चूतस्य फले न तु पल्लव इति नास्योपयोगः कथञ्चिदुपयोगे वा हस्तकेन पल्लवादिरप्यभिनेयो न तु वेषेपि स्थाप्य इत्यत आहुर्वस्तुनिर्देशेत्यादि । नाट्ये हि न रासन आस्वादः किन्तु काव्येन शब्दद्वारैवात्र पल्लवादिवस्तूनां हस्तकनिर्देशेन चाक्षुषद्वारा मानस आस्वादो न तु तदभिव्यङ्ग्यस्यापि तस्य बोधनमतस्तेन रसवत्फलबोधार्थं प्रथमं पल्लवो मतो विचारितः । तथा च चूतपल्लवेन रसवत्फलं भावीति स्वद्वारा बोध्यत इति तेन मानसिकास्वादसिद्धिरिति रसप्रतिष्ठा तत्रापि न दुर्घटेति पल्लव उचित एव । तस्य हस्तेनाभिनय उक्तरीत्या मानसमात्रं न तु रसवत्फलपर्यवसायित्वबोधनमपीत्यतस्तत्स्थापन-

---

१ दर्शितो मत इत्यपि पाठः । २ गौणीत्यर्थः । ३ प्रर्णाल्येत्यपि पाठः । ४ धर्माणामित्यर्थः । ५ पल्लवस्य । ६ वस्तु

मित्यर्थः । भगवान् हि स्वरूपात्मकमेव हि रसमभिनयादिना यत्र स्थापयति ततः कदापि न गच्छति किन्तु बीजत्वात् फलं प्रयच्छतीतिवस्तुस्थितिः । तथा च भावव्रतामनया प्रणाड्या प्राप्तरसानामग्रे फलप्राप्तत्वदृश्यम्भावाय प्रथमं पल्लवस्थापनोक्तिरितिभावः । ननु भवत्वेतदेवं तथापि रसशास्त्र इष्टदर्शनादिभिस्तत्तद्धेतुभिर्जनितः प्रमोदात्मा स स्थायिभावस्तत्तदनुकूलदेशकालकलावेषभोगादिसेवनप्रभृतिभिस्तत्तद्धेतुभिः प्रकृष्यमाणः स स रस इत्युच्यते स च मनोविकार एवान्तरश्चानेकरूपश्चानित्यश्च भगवांस्तु न तथा किञ्च पूर्वश्लोके वरत्वमुपपादितमत्र च नटदृष्टान्तेनाभिनेतृत्वं तथैव विनीयमाणश्लोकेपि । एवं चालम्बनत्वमभिनेतृत्वं च स्फुटति न तु सर्वरसत्वमतः कथं प्रतिज्ञापूर्तिरित्याकाङ्क्षायामाहुः कारिकायां शास्त्रार्थस्येत्यादि । अयमर्थः । 'रसो वै स' इतिश्रुत्या 'असद्वा इदमग्र आसीदि'त्यादिनोपक्रान्तस्य ब्रह्मण एव रसत्वं बोध्यते । रसशब्दश्च रसनाग्राह्ये गुणे द्रवद्रव्ये सारभूतेर्थे आस्वाद्यानन्दजनके च तत्र तत्र प्रसिद्धः । तेषु प्रकृते कोर्थो विवक्षित इत्याकाङ्क्षायां 'रसं ह्येवायं लब्ध्वानन्दीभवति को ह्येवान्यात् कः, प्राण्यात् यदेष आकाश आनन्दो न स्यादेष ह्येवानन्दयाती' त्यनेन रसस्यानन्दत्वं प्राणधारणप्रयोजकत्वं हृदयाकाशस्थत्वमानन्दजनकत्वं च तस्यैवोच्यते । तेन हृदयस्थः, प्राणिनामानन्दजनको य आनन्दः स रस इति सिध्यति । तत्र यद्यप्यानन्दोत्पत्तिरूपस्य कार्यस्य तत्तदवयवेष्वनुभूयमानत्वेनानन्दस्य सर्वशरीरव्यापित्वं तथाप्युक्तश्रुत्या 'स मानसीन आत्मा जनाना'मितिश्रुत्यन्तरेण च मनस्येव तस्य विशेषतः स्थितिरिति निश्चीयते । एवं सति रसशास्त्रप्रणाड्या जायमानो यो मानसो विकारः प्रमोदात्मा स रसात्मनो भगवत एव कार्यभूत 'एष ह्येवानन्दयाती'ति सावधारणश्रुतेस्तथा तदंशभूतश्च 'तस्यैवानन्दस्ये'तिश्रुतेः । अत एव च प्रकृष्यमाणे तस्मिन् रसत्वप्रतीतिर्लोकानां तथाप्रयोगश्च ब्रह्मादिषु पुरुषपदप्रयोगवद् भाक्तः । न चैवं सत्यानन्दमात्रस्यैव तथात्वात् प्रणाड्यामेव कुतो विशेष इति शङ्क्यम् । रसस्वरूपस्यैव तथात्वात् । न च मानाभावः । लौकिकस्य प्रणाड्यभिव्यङ्ग्यत्वे सिद्धे तद्दृष्टान्तेनालौकिकेपि . तथात्वमातुं शक्यत्वात् । कारणतद्धर्माणामेव कार्येभिव्यक्तेः सन्देहनिरासाय । न चानित्यत्वापत्तिः । ब्रह्मत्वादेव तन्निरासात् । अत एव न मनोविकारत्वमपि । नाप्यनेकरूपत्वं दोषाय । तस्य

मित्यर्थः । भगवान् हि स्वरूपात्मकमेव हि रसमभिनयादिना यत्र स्थापयति ततः कदापि न गच्छति किन्तु बीजत्वात् फलं प्रयच्छतीतिवस्तुस्थितिः । तथा च भाववतां नाट्यप्रणाड्या प्राप्तरसानामग्रे फलप्राप्तेरवश्यम्भावाय प्रथमं पल्लवस्थापनोक्तिरितिभावः । ननु भवत्वेतदेवं तथापि रसशास्त्र इष्टदर्शनादिभिस्तत्तद्धेतुभिर्जनितः प्रमोदात्मा स स्थायिभावस्तत्तद्रसानुकूलदेशकालकलावेषभोगादिसेवनप्रभृतिभिस्तत्तद्धेतुभिः प्रकृष्यमाणः स स रस इत्युच्यते स च मनोविकार एवान्तरश्चानेकरूपश्चानित्यश्च भगवांस्तु न तथा किञ्च पूर्वश्लोके वरत्वमुपपादितमत्र च नटदृष्टान्तेनाभिनेतृत्वं तथैव विनीयमाणश्लोकेपि । एवं चालम्बनत्वमभिनेतृत्वं च स्फुटति न तु सर्वरसत्वमतः कथं प्रतिज्ञापूर्तिरित्याकाङ्क्षायामाहुः कारिकायां शास्त्रार्थस्येत्यादि । अयमर्थः । 'रसो वै स' इतिश्रुत्या 'असद्वा इदमग्र आसीदि'त्यादिनोपक्रान्तस्य ब्रह्मण एव रसत्वं बोध्यते । रसशब्दश्च रसनाग्राह्ये गुणे द्रवद्रव्ये सारभूतेर्थे आस्वाद्यानन्दजनके च तत्र तत्र प्रसिद्धः । तेषु प्रकृते कोर्थो विवक्षित इत्याकाङ्क्षाया 'रसं ह्येवायं लब्ध्वानन्दीभवति को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यादेष ह्येवानन्दयाती'त्यनेन रसस्यानन्दत्वं प्राणधारणप्रयोजकत्वं हृदयाकाशस्थत्वमानन्दजनकत्वं च तस्यैवोच्यते । तेन हृदयस्थः प्राणिनामानन्दजनको य आनन्दः स रस इति सिध्यति । तत्र यद्यप्यानन्दोत्पत्तिरूपस्य कार्यस्य तत्तदवयवेष्वनुभूयमानत्वेनानन्दस्य सर्वशरीरव्यापित्वं तथाप्युक्तश्रुत्या 'स मानसीन आत्मा जनाना' मितिश्रुत्यन्तरेण च मनस्येव तस्य विशेषतः स्थितिरिति निश्चीयते । एवं सति रसशास्त्रप्रणाड्या जायमानो यो मानसो विकारः प्रमोदात्मा स रसात्मनो भगवत एव कार्यभूत 'एष ह्येवानन्दयाती'तिसावधारणश्रुतेस्तथा तदंशभूतश्च 'तस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'तिश्रुतेः । अत एव च प्रकृष्यमाणे तस्मिन् रसत्वप्रतीतिर्लोकानां तथाप्रयोगश्च ब्रह्मादिषु पुरुषपदप्रयोगवद् भाक्तः । न चैवं सत्यानन्दमात्रस्यैव तथात्वात् प्रणाड्यामेव कुतो विशेष इति शङ्क्यम् । रसस्वरूपस्यैव तथात्वात् । न च मानाभावः । लौकिकस्य प्रणाड्यभिव्यङ्ग्यत्वे सिद्धे तद्दृष्टान्तेनालौकिकेपि तथात्वमातुं शक्यत्वात् । कारणतद्धर्माणामेव कार्येभिव्यक्तेः सन्देहनिरासाय । न चानित्यत्वापत्तिः । ब्रह्मत्वादेव तन्निरासात् । अत एव न मनोविकारत्वमपि । नाप्यनेकरूपत्वं दोषाय । तस्य

---

१ कारिकास्वपि । २ रसात्मनि भगवति । ३ 'रसो वै स' इति भगवति पुरुषपदप्रयोगश्च । ४ रसवत्त्वात् । ५ अलौकिकमित्यपि पाठः ।

प्रणाडीकृतत्वेन वास्तविकरूपत्वाबाधकत्वा'दनन्तरूप'मितिश्रुत्या वास्तविकत्वाच्च । तेनेदं सिद्धम् । परं ब्रह्मैव रसशास्त्रोक्तप्रणाड्या हृद्याविर्भूतं सत् स रसं इति । तत्र च चिदंशो न्यग्भूत एव । अत एव 'कृषिर्भूवाचक' इतिश्रुतौ सदानन्दत्वमेवोक्तम् । न च भूशब्दस्य सत्तावाचकत्वात् सत्तानन्द इति भवति न तु सदानन्द इति शङ्क्यम् । तत्सत्ताया आत्मरूपत्वेन धर्मत्वाभावस्य व्याकरणमते सिद्धत्वात् सत एव सिद्धेः । अतः परब्रह्मणस्तथात्वेन प्रणाड्याविर्भूतेपि तथात्वमेव । नन्वस्त्वेवं तथाप्युक्तश्रुतौ ब्रह्मणो रसत्वमुच्यते न तु रसस्य ब्रह्मत्वं तथा सति बहिराविर्भूतस्य भगवतो रसत्वाभावात् कथं प्रतिज्ञायाः पूर्तिरिति चेदित्थम् । यत्रेदं वर्ण्यते न तत्र भगवान् बहिः प्रकटः किन्तु हृद्येवेत्युपपादितं 'बर्हापीडे'त्यस्य स्वतन्त्रे । यदापि बहिस्तदाप्यासक्तिभ्रमन्यायेन 'मानसीन' एवेति तत्पूर्तेः । नन्वेवं सति वृत्तिविशेषरूपत्वान्न भगवानिति चेन्न । लोके वृत्त्या भावस्य देशकालपरिच्छिन्नत्वेन तत्र तदभावेपि विरहादौ संस्कारप्राबल्यादिना वृत्तिनिर्गमात् ख्यातिः स्वीक्रियते न तथा प्रकृते । देशकालापरिच्छिन्नत्वात् । किन्त्वनन्यभक्तिलभ्यत्वाद् यादृशी सा तथा तत्राविर्भवति । सा च मनोधर्म इति तदभिव्यङ्ग्यत्वेन बहिराविर्भूतस्य मानसीनत्वेन वृत्तित्वाभावान्मायावादिमते वृत्त्यवच्छिन्नविषयावच्छिन्नयोश्चैतन्ययोरेकत्वाभावे बहिःस्थस्य वृत्त्यवच्छिन्नत्वेपि वृत्तित्वाभाववत् । नन्वस्त्वेवं तथापि प्रकृतानुरोधाच्छृङ्गारात्मकत्वमेवात्र वक्तव्यं तस्य च परस्परसाकाङ्क्षस्त्रीपुंव्यक्त्यात्मकालम्बनद्वयाधीनस्थितिकत्वादत्रापि तथात्वमङ्गीकर्तव्यं तच्च भगवतो रसत्वे विरुध्येतैकालम्बनकत्वेन रसाभासत्वप्रसञ्जकत्वादिति चेन्न । आलम्बनत्वस्यापि सत्त्वात् । 'कामिनां दर्शयन् दैन्य'मित्यस्य टिप्पण्यां 'रसात्मको रसवांश्च भगवा'निति कण्ठरवेणोक्तत्वात् । न च विरोधः । स्वप्रतिष्ठत्वस्य श्रौतत्वेन सर्वसम्मतत्वात् । यथान्येषां कामेन कामवत्त्वं कामस्य तु स्वत एव तथान्येषां रसेन रसवत्त्वं रसस्य तु स्वत इत्यस्यापि सुवचत्वाच्च तदप्रसङ्गात् । तस्माद् बहिराविर्भूतस्यापि भगवतो रसत्वमबाधमेव । तथा चैवम्प्रकारकस्य शास्त्रार्थस्य श्रुत्यर्थस्य परिज्ञानाद् विचारपूर्वकान्निश्चयाद् भावस्य कलिका स्थायिभावात्मिका विचारयतां भवेत् । बीजाङ्कुरादिकं तु पूर्वमनुभवात्मकं सिद्धमेवास्तीतिभावः । ततस्तस्य स्थायिभावस्य वैचित्र्यं भावादि-व्यभिचारिभावादि-

प्रणाडीकृतत्वेन वास्तविकरूपाबाधकत्वा 'दनन्तरूप'मितिश्रुत्या वास्तविकत्वाच्च । तेनेदं सिद्धम् । परं ब्रह्मैव रसशास्त्रोक्तप्रणाड्या विर्भूतं सत् स रस इति । तत्र च चिदंशो न्यग्भूत एव । अत एव 'कृषिर्भूवाचक' इतिश्रुतौ सदानन्दत्वमेवोक्तम् । न च भूशब्दस्य सत्तावाचकत्वात् सत्तानन्द इति भवति न तु सदानन्द इति शङ्क्यम् । तत्सत्ताया आत्मरूपत्वेन धर्मत्वाभावस्य व्याकरणमते सिद्धत्वात् सत एव सिद्धेः । अतः परब्रह्मणस्तथात्वेन प्रणाड्याविर्भूतेपि तथात्वमेव । नन्वस्त्वेवं तथाप्युक्तश्रुतौ ब्रह्मणो रसत्वमुच्यते न तु रसस्य ब्रह्मत्वं तथा सति बहिराविर्भूतस्य भगवतो रसत्वाभावात् कथं प्रतिज्ञायाः पूर्तिरिति चेदित्थम् । यत्रेदं वर्ण्यते न तत्र भगवान् बहिःप्रकटः किन्तु हृद्येवेत्युपपादितं 'बर्हापीडे'त्यस्य स्वतन्त्रे । यदापि बहिस्तदाप्यासक्तिभ्रमन्यायेन 'मानसीन' एवेति तत्पूर्तेः । नन्वेवं सति वृत्तिविशेषरूपत्वान्न भगवानिति चेन्न । लोके वृत्त्या भावस्य देशकालपरिच्छिन्नत्वेन तत्र तदभावेपि विरहादौ संस्कारप्राबल्यादिना वृत्तिनिर्गमात् ख्यातिः स्वीक्रियते न तथा प्रकृते । देशकालापरिच्छिन्नत्वात् । किन्त्वनन्यभक्तिलभ्यत्वाद् यादृशी सा तथा तत्राविर्भवति । सा च मनोधर्म इति तदभिव्यङ्ग्यत्वेन बहिराविर्भूतस्य मानसीनत्वेन वृत्तित्वाभावान्मायावादिमते वृत्त्यवच्छिन्नविषयावच्छिन्नयोश्चैतन्ययोरेकत्वाभावे बहिःस्थस्य वृत्त्यवच्छिन्नत्वेपि वृत्तित्वाभाववत् । नन्वस्त्वेवं तथापि प्रकृतानुरोधाच्छृङ्गारात्मकत्वमेवात्र वक्तव्यं तस्य च परस्परसाकाङ्क्षस्त्रीपुंव्यक्त्यात्मकालम्बनद्वयाधीनस्थितिकत्वादत्रापि तथात्वमङ्गीकर्तव्यं तच्च भगवतो रसत्वे विरुध्येतैकालम्बनकत्वेन रसाभासत्वप्रसञ्जकत्वादिति चेन्न । आलम्बनत्वस्यापि सत्त्वात् । 'कामिनां दर्शयन् दैन्य'मित्यस्य टिप्पण्यां 'रसात्मको रसवांश्च भगवा'निति कण्ठरवेणोक्तत्वात् । न च विरोधः । स्वप्रतिष्ठत्वस्य श्रौतत्वेन सर्वसम्मतत्वात् । यथान्येषां कामेन कामवत्त्वं कामस्य तु स्वत एव तथान्येषां रसेन रसवत्त्वं रसस्य तु स्वत इत्यस्यापि सुवचत्वाच्च तदप्रसङ्गात् । तस्माद् बहिराविर्भूतस्यापि भगवतो रसत्वमबाधमेव । तथा चैवम्प्रकारकस्य शास्त्रार्थस्य श्रुत्यर्थस्य परिज्ञानाद् विचारपूर्वकान्निश्चयाद् भावस्य कलिका स्थायिभावात्मिका विचारयतां भवेत् । बीजाङ्कुरादिकं तु पूर्वमनुभवात्मकं सिद्धमेवास्तीतिभावः । ततस्तस्य स्थायिभावस्य वैचित्र्यं भावादि-व्यभिचारि-

१ सदानन्दत्वेन । २ सदानन्दत्वम् । ३ ब्रह्मणो रसत्वेत्यादि । ४ अहङ्कृदस्थितो वा बहिः स्थित इत्यासक्त्या भ्रमरत्न्यायेन । ५ प्रतिज्ञा- । ६ विशय- । ७ देशे । ८ तस्वभावेपि । ९ बहिःस्थितस्य घटादेः । १० स्वस्मिन् भगवति स्थितत्वस्य प्रियारूपालम्बनस्य । ११ भगवतीतिशेषः ।

**गोप्यः किमाचरदयं कुशलं स्म वेणुर्दामोदराधरसुधामपि गोपिकानाम् ।**
**भुङ्क्ते स्वयं यदवशिष्टरसं ह्रदिन्यो हृष्यत्त्वचोऽश्रु मुमुचुस्तरवो यथार्याः ॥९॥**

एवं रसं निरूप्य तस्याधिदैविकरूपतासम्पादकं वेणुनादं निरूपयन्ति गोप्य इति ।

गोप्य इतिसम्बोधनं पूर्वरसाभिज्ञापकम् । नात्र बोधनीयं वचनीयं वा किञ्चिदस्ति । यद्यपि तेन रसो न पीतस्तथापि मुखे सन्दर्शनादन्यार्थत्वेपि भोजनं करोतीति लक्ष्यते । पुरुषस्य तद्भोजनं सर्वथासम्भावितम् । अन्यथा भगवतैव भुक्तं स्यात् । अतः स्त्रीणामेतद् भोग्यम् । तदाह गोपिकानामिति । अधरसुधा गोपिकानां सम्बन्धिनी । बहुवचनेन समुदायरूपा लक्ष्मीरप्यनेन सूचिता । तदंशाश्च तथैव समागताः । नान्यत्र तद्भोगो लोके प्रसिद्धः । तादृशस्य वस्तुनो भोक्ता पुरुष एव न भवति किम्पुनर्योन्यन्तर्गतो जीवस्तत्रापि वेणुः ? आधिदैविकस्य चेतनत्वं सूचयन्त्य आहुः सर्वा एव आधिदैविक्य इति स्वगोष्ठ्यां तस्यापि विचारो घटते । सर्वं धर्मफलमितिर्वैदिकसिद्धान्तः । अतः कारणभूतं धर्मं विचारयन्ति किमाचरदिति । धर्मः सर्वोपि वेदसिद्धः । वेदरूपाश्च वयम् । अतोस्मदज्ञातः कथं धर्मो भवति येन धर्मेण वयं जाताः ? परं तत्रापि मर्यादान्यायेन साधनविरोधाभावः । ततोस्मासु स्त्रीत्वम् । वेणौ तु तदभावस्ततः सन्देहः फलस्य दृष्टत्वाच्च । सम्मत्यर्थं च गोपिकासम्बोधनम् । अयमितिपुल्लिङ्गनिर्देशश्च बाधकः । स्मेति प्रसिद्धिश्च । वस्तुतस्तु न तस्य फलम् । तदुपपादितम् । तत्रान्यतराबाधे कर्तव्ये साधनवत्त्वनिश्चयेन फलाभावः पूर्वपक्षः । फलवत्त्वविचारेण साधनाभावाभावः सिद्धान्तः । तदाह वेणुपदेन । वश इश्च वयौ तावणूकृतौ येनेति । लोकेभ्यस्तथात्वसुखदानाद् धर्मोस्तीति निश्चीयते । अधरसम्बन्धादेव तथात्वमित्यनिश्चयोपि । तथापि साधनं स्वयमेवेतिनिश्चयः । पुष्टिक्रममाश्रित्य तस्य सिद्धिरिति ज्ञापयितुं मर्यादायां हीनतामाह दामोदरेति । दाम उदरे यस्येति भगवतो गोपिकाधीनत्वं सूचितम् । लोभात्मकश्चाधरः । अतः स्वतः परतश्च तस्य साधनाभावः सूचितः । सुधापदेन च रसविवक्षायां रसनेन्द्रियाभावश्च बाधकत्वेन सूचितः । नादं भुङ्क्त इत्यविवादम् । सुधामपि भुङ्क्त इति विवादास्पदम् । "सा

कृतं भवेत् । तदिहास्मिन् श्लोके पुष्पस्थानमुच्यते । 'विचित्रवेषा' वित्यनेन कथ्यते । ततोहोरात्रं वासना तत्तद्भावनारूपा स्यात् । तथा सति प्रसिद्ध्या रसत्वाद्धीयेतेत्याच्छादनं विवरणे । अन्यथा प्रयोजनाभावाद् परिकरं न स्मरेयुः । इममर्थं सङ्गृह्य साधकशिक्षार्थमाहू रसेत्यादि । एतावदर्धश्लोकोक्तम् । सिद्धदशायां फलानुभवप्रकारमुत्तरार्धेन बोधयन्तीत्याशयेनाहुराविरित्यादि । तथा च तदा 'मानसीन'स्य बहिराविर्भावे स्वधर्मप्राकट्यं करोतीत्यर्थः । सिद्धमाहुरत इत्यादि । तथा चोक्तप्रणाल्यान्तराविर्भूतो रसो बहिराविर्भूतस्तु धर्मसाहित्यात् तदुद्बोधकत्वाच्च साधनमतः स्थानभेदेनोभयमप्यविरुद्धमितिभावः । अयाणामित्यादेरर्थं टिप्पण्यामाहुः स्थायीत्यादि । तदेवोक्तमिति । गोष्ठीमध्ये विराजनमेवोक्तमित्यर्थः ॥ ८ ॥

भावादि–कृतं भवेत् । तदिहास्मिन् श्लोके पुष्पस्थानमुच्यते । 'विचित्रवेषा' वित्यनेन कथ्यते । ततोहोरात्रं वासना तत्तद्भावनारूपा स्यात् । तथा सति प्रसिद्ध्या रसत्वाद्धीयेतेत्याच्छादनं विवरणे । अन्यथा प्रयोजनाभावाद् परिकरं न स्मरेयुः । इममर्थं सङ्गृह्य साधकशिक्षार्थमाहू रसेत्यादि । एतावदर्धश्लोकोक्तम् । सिद्धदशायां फलानुभवप्रकारमुत्तरार्धेन बोधयन्तीत्याशयेनाहुराविरित्यादि । तथा च तदा 'मानसीन'स्य बहिराविर्भावे स्वधर्मप्राकट्यं करोतीत्यर्थः । सिद्धमाहुरत इत्यादि । तथा चोक्तप्रणाल्यान्तराविर्भूतो रसो बहिराविर्भूतस्तु धर्मसाहित्यात् तदुद्बोधकत्वाच्च साधनमतः स्थानभेदेनोभयमप्यविरुद्धमितिभावः । अयाणामित्यादेरर्थं टिप्पण्यामाहुः स्थायीत्यादि । तदेवोक्तमिति । गोष्ठीमध्ये विराजनमेवोक्तमित्यर्थः ॥८॥

१ शृङ्गारादिकम । २ चूतप्रवालेति । ३ मध्ये विरेजतुरिति । ४ रस– । ५ अन्तराविर्भूतबहिराविर्भूतरसरूपभगवत्स्वरूपोभयमप्यविरुद्धम् ।

वनस्पतीन् प्राविश"दितिश्रुतेः। सुधानधिकारः पूर्वमुपपादितः। किञ्च भगवांश्चेद् दद्यात् कदाचित् सम्भवेदपि। व्यभिचारे स्त्रीसिद्धान्तवत्। गोपिकावत् स्वयं भुङ्क्त इत्याश्चर्यम्। अधरमुखसम्बन्धे पानमस्माकं सिद्धमस्ति। तस्यापि मन्यामहे। किञ्चास्मदपेक्षयापि तस्मिन् विशेषः। यस्मिन् भोजनेवशिष्टं रसं ह्रदिन्यस्तरवश्च भुञ्जते। बालत्वान्मातरंपितरावेव पालयति। उभयत्र हेतुमाह। यतो ह्रदिन्यो हृष्यत्त्वचो जाता अन्तःपूर्णानन्दास्ततोप्यानन्दाधिक्ये रोमाञ्चयुक्ता भवन्ति। तत्रायं निर्णयः। रोमाञ्चोत्र कमलरूपः। स च जगति सर्वोत्तमः। अतो हेत्वन्तरानन्दरोमाञ्चो न भवति। तथा सति शैवालानामेवोद्गमः स्यान्न कमलादीनाम्। अतो ज्ञापतेधरामृतमेव ह्रदिनीभिः पीतमिति। अन्यथा तेषु लक्ष्म्या उद्गमो न स्यात्। "यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घना"दितिन्यायात्। लक्ष्म्यास्तदेकभोगित्वमुपपादितम्। उपलक्षणमेतत्। अश्रु च मुमुचुः। न हि मकरन्दोन्यस्य रसो भवति। तरवश्च तथा। तेषां रोमाञ्चः फलान्यश्रु च मधुधाराः। एतच्चोभयविधं नान्यथा सम्भवति। न चैतद् द्वयं तयोः स्वाभाविकमिति मन्तव्यम्। कादाचित्कत्वाद् वेणुनादानन्तरमेव तथात्वात् स्वाभाविकवैलक्षण्याच्च। तदाह यथार्या इति। सन्तो हि भगवद्धर्मान्तःप्रवेश एव तथा भवन्तीति। तस्माद् ह्रदिन्यो मातृरूपास्तरवः पितृरूपाश्च तद्भुक्तावशिष्टरसपातारः॥

अत्रेदं[1] विचार्यते। पूर्वं "रन्ध्रान् वेणोरधरसुधया पूरयन्नि"त्युक्तम्। तस्य रन्ध्रा एव मुखरूपा इति तत्र पूरिता चेत् सा तदानायासेनैव प्रभुकारित एव तद्भोगो भवत्यतः स्वयं भुङ्क्त इत्यनुपपन्नं यद्यपि तथापि स्वप्रियाणां साक्षात्सुधाभोगाधिका सम्पत्त्यर्थमुक्तरीत्या सुधापूरणं वेण्वर्थं नात एव गोपिकानामित्युक्तम्। एवं सति यदस्य तद्भोजनं तत् स्वत एवेति सुष्टूक्तं स्वयं भुङ्क्त इति। नन्वेवमेतद्भुक्तावशिष्टस्यैव रसस्य पानं प्रभुप्रियाणामप्यायाति रन्ध्रसम्बन्धस्य प्राथमिकत्वात् किञ्चित्कालप्रभोजने हेत्वभावादिति चेदत्रैवं प्रतिभाति। अत्रत्यं सर्वमलौकिकमतो लौकिकयुक्त्या निर्णेतुं नोचितमन्यथा 'सरःसरिन्महीध्रेषु' कृतं वेणुकूजितं व्रजस्थिताः स्वामिन्य एव कथं शृणुयुर्नान्ये? एतच्चोपपादितं "तद् व्रजस्त्रिय" इत्यत्र। एवं सति भगवदिच्छाया बलिष्ठत्वात् प्रयोजनस्यातिगुरुत्वाच्चादौ व्रजदेवीकर्णहृदयेष्वेव सा प्रविष्टा। अपरञ्च यथोच्छ्वासदशायामास्यपतितमप्युद्गीर्णमेव वस्तु भवति न निगीर्णं तथा भगवता व्यवहितदेशस्थस्वप्रियाकर्णहृदयपूरणैकचित्तेन निजास्याम्बुजाविर्भवच्छ्वासो नादब्रह्माविर्भावहेतुस्तादृशः कृतो यो मार्गत्वेन प्रसक्तो रन्ध्रेष्वायातस्तत्र च सुधां पूरितामभीष्टदेशेनयदतो न तामितरो भोक्तुं शक्तः। एवं सत्यपि साक्षादधरसम्बन्धो मुखे वेणोरस्तीति सम्भाव्यते तत्पानं वेणुत्वेन निश्चयोप्यतोस्य तद्भोगो व्रजदेवीनां तूक्तरीत्या साक्षाद्भोगस्तस्मान्नैतदवशिष्टं रसस्य। अन्यथा ह्रदिन्यादिषु यथावशिष्टरसपानमुक्तं तथात्रापि वदेयुर्न तु गोपिकानामितिपदेनं तासामेवात्र स्वत्वं वदेयुः। अपरञ्च वेणोः स्वातन्त्र्येण सुधाभोगो भगवता मनीषितोन्यथा ह्रदिन्यादिषु सुधासम्बन्धो न स्यात्। तथा सति तेषु क्रीडा न स्यात्। यत एतत्सुधासम्बन्धिष्वेव सा चिकीर्षितातो जलस्थलरमणसम्बन्धिषु तत्सम्बन्धः कार्यते। स च वेणुभुक्तसुधांशो यो नादद्वारा निर्गतस्तेनैवेति सर्वमवदातम्। एवं सति व्रजदेवीनां वेणोश्च युगपत्सुधाभोग उपपद्यते। किञ्च दामोदरत्वेन व्रजदेव्यधीनस्तदुपभोगोपयोगि सर्व-

1 इदं स्वतन्त्रं श्रीमत्प्रभुचरणकृतं क्वचित्पुस्तकेषु श्रीसुबोधिन्यन्तःश्लिष्टं दृश्यते।

मवशः सम्पादयतीति किमितोऽधिकं वदामः? न हि जलधिरुद्वेलः केनापि निरोद्धुं शक्य इति दिक् । इदं वेणुवादनं "रन्ध्रान् वेणोरधरसुधये"तिवाक्येन यदुक्तं तदिति जानीमः । यतोऽन्यदापि गवामाह्वाने"नुचरै" रित्यत्र "गा गोपकै" रित्यादिषु "नद्यस्तदे"त्यादिषु च कृतादीनामर्थ्ये तत्कार्यमुच्यते । तेनादावेवात्राधिकारसम्पत्त्यर्थं वेणुरन्ध्रेषु यत् सुधापूरणं तत्सामयिकमेवेदमुच्यत इतिज्ञापनायापि गोपिकानामित्युक्तम् ॥ ९ ॥

गोप्यः किमाचरदित्यस्याभासे–तस्याधिदैविकरूपतासम्पादकमिति । कामरसो हि सहजः वेणुनादेन सह सुधान्तःप्रविश्य सहजं पूर्वकामं दूरीकृत्य भगवदीयं तं प्रकटितं करोतीति तथा । दामोदरेत्यस्याभासे–मर्यादायां हीनतामिति । हीनतां साधनहीनतां न्यूनतामितियावत् । नादं भुङ्क्त इत्यत्र प्रमाणमाहुः 'सा वनस्पती'नित्यादि । 'वाग् वै देवेभ्योपाक्रामद् यज्ञायातिष्ठमाना सा वनस्पतीन् प्राविश'दितिश्रुतिः । सुधाभोगविनोदे हेतुः सुधानधिकार इति ॥ ९ ॥

गोप्य इत्यत्र–टिप्पण्यां सहजमित्यादि । तथा च मनोधर्मरूपं तं दूरीकृत्य भगवद्धर्मरूपं तं तथा करोति । तथा चास्य इन्द्रियाणीव भगवदीयसुधा कार्यं करोतीत्यर्थः । एतेन लौकिकसाधर्म्याल्लौकिकत्वशङ्कापि निरस्ता ज्ञेया । सुबोधिन्यां पूर्वरसाभिज्ञापकमिति । श्रुतिवरदानसामयिकरसाभिज्ञापकम् । वेणौ सुधापूरणं वक्तुं विचारबीजभूतामुत्कटां कोटिमाहुर्यद्यपीत्यादि । लक्ष्यत इति । सम्भाव्यते । ननु लक्ष्म्या अपि तद्भोक्तृत्वात् कथं गोपिकामात्रसम्बन्धित्वमित्याकाङ्क्षायां तामपि स्वान्तराहुर्यद्बुवचनेनेत्यादि । तत्रापि वेणुरिति । स्थावरःसदंशः । आहुरिति । भोजनमाहुरित्यर्थः । येनेति । विचाररूपेण । साधनविरोधाभाव इति । स्वरूपयोग्यत्वादित्यर्थः । वैदिकविचारस्तदधिकरणरीत्याहुस्तर्हीत्यादि । अत्र वेणुकृतभोगो विषयः । स सम्भवति न वेतिसंशयः । सङ्गतिः प्रसङ्गः । भुज्यमानस्य स्वीयत्वेन तद्विचारस्योपेक्षानर्हत्वादिति ज्ञेयम् । साधनेत्यादि । स्वरूपयोग्यतासम्पादकं साधनत्वं ज्ञेयम् । निश्चीयत इति । स्वरूपयोग्यताभावेऽपि तत्सत्तामुमीयत इत्यर्थः । उभयसमाधानार्थं सिद्धान्तमाहुस्तथापीत्यादि । तर्हि तत्रापि किं साधनं येन स्वयं तथेत्यत आहुः पुष्टीत्यादि । टिप्पण्यां न्यूनतामिति । येन भगवान् वशे भवति तादृक् साधनं मर्यादायां नास्तीति तथेत्यर्थः ॥९॥

गोप्य इत्यत्र–तस्याधिदैविकेत्यादेरर्थं टिप्पण्यामाहुः कामरसेत्यादि । आभासे टिप्पण्यां सहजमित्यादि । तथा च मनोधर्मरूपं तं दूरीकृत्य भगवद्धर्मरूपं तं तथा करोति । तथा च आसन्य इन्द्रियाणीव भगवदीयसुधा कार्यं करोतीत्यर्थः । एतेन लौकिकसाधर्म्याल्लौकिकत्वशङ्कापि निरस्ता ज्ञेया । सुबोधिन्यां निरूपयतीति । 'रन्ध्रान् वेणोरधरसुधया पूरय'न्नित्येतस्य विमर्शतया वदन्ति । पूर्वरसाभिज्ञापकमिति । श्रुतिवरदानसामयिकरसाभिज्ञापकम् । वेणौ सुधापूरणं वक्तुं विचारबीजभूतामुत्कटां कोटिमाहुर्यद्यपीत्यादि । लक्ष्यत इति । सम्भाव्यते । ननु लक्ष्म्या अपि तद्भोक्तृत्वात् कथं गोपिकामात्रसम्बन्धित्वमित्याकाङ्क्षायां तामपि स्वान्तराहुर्यद्बुवचनेनेत्यादि । तत्रापि वेणुरिति । स्थावरः सदंशः । आहुरिति । भोजनमाहुरित्यर्थः । येनेति । विचाररूपेण । साधनविरोधाभाव इति । स्वरूपयोग्यत्वादित्यर्थः । तथोपपादितमिति । 'बर्हापीड'–इत्यत्रोपपादितम् । वैदिकविचारस्तदधिकरणरीत्याहुस्तर्हीत्यादि । अत्र वेणुकृतभोगो विषयः । स सम्भवति न वेतिसंशयः । सङ्गतिः प्रसङ्गः । भुज्यमानस्य स्वीयत्वेन तद्विचारस्योपेक्षानर्हत्वादिति ज्ञेयम् । साधनेत्यादि । स्वरूपयोग्यतासम्पादकं साधनत्वं ज्ञेयम् । निश्चीयत इति । स्वरूपयोग्यताभावेऽपि सोऽनुमीयत इत्यर्थः । उभयसमाधानार्थं सिद्धान्तमाहुस्तथापीत्यादि । तर्हि तत्रापि किं साधनं येन स्वयं तथेत्यत आहुः पुष्टीत्यादि । हीनतापदस्यार्थं टिप्पण्यामाहुर्न्यूनतामिति । येन भगवान् वशो भवति तादृक् साधनं मर्यादायां नास्तीति तथेत्यर्थः । एवं चास्मिन् श्लोक आर्यदृष्टान्तेन नदीतर्णां रसपात्रत्वबोधनाद् वेणौ सुधापूरणं निर्णीतमिति ज्ञेयम् ॥ ९ ॥

---

१ विमर्शेत्यादिरपि पाठः । २. स्थावरः सन् अंशो वंशखण्डः । ३. साधनम् ।

**वृन्दावनं सखि भुवो वितनोति कीर्तिं यद् देवकीसुतपदाम्बुजलब्धलक्ष्मि।**
**गोविन्दवेणुमनु मत्तमयूरनृत्यं प्रेक्ष्याद्रिसान्ववरतान्यसमस्तसत्त्वम् ॥ १० ॥**

वृन्दावनविहारे चरणानां स्वरूपमाह वृन्दावनमिति।

देवानां पादा भूमिं न स्पृशन्ति सुतरां देवोत्तमस्य तत्रापि पुरुषोत्तमस्य। पुरुषोत्तमांशस्य पुरुषस्य महाधिभौतिकौ पादावाध्यात्मिकावतीन्द्रियावाधिदैविकावानन्दरूपौ। तयोरपि न भूमिसम्बन्धः। भूमावपि दैत्यभूमिरधमा। तत्रापि स्त्रीसम्बन्धिनी। तद् वृन्दावनम्। तस्मिन् भगवतः पादा वर्तन्त इति तस्या भाग्याभिनन्दनं स्वस्यौत्कण्ठ्यख्यापकम्। स्वस्यापि हृदयदेशो भूमिर्भवति। स्त्रीणां च हृदयं कठिनमपि भवति। पर्वता अपि सन्त्यन्तःप्रवाहा नद्यश्च सन्ति रसपूराः। रोमपङ्क्तिर्वनमपि। भवति स्त्रीसम्बन्धि च। एवं तुल्यतायामप्यत्र चरणौ न स्थाप्येते तत्र स्थाप्येते इतीर्ष्यया वर्णनम्। गुणत्रयेण पूर्वं वर्णनं निर्गुणगोपिका त्वेषेति नात्रासूयेति केचित्। सखीति सम्मत्यर्थम्। तादृश्यो न बह्व्य इत्येकवचनम्। असूयापक्षेऽपि तथा। ननु भगवत्पदानि यथा व्यापिवैकुण्ठे भवन्त्येवं वृन्दावनेऽपि जातानीति किमाश्चर्यम्? तत्राह **भुवो वितनोति कीर्तिमिति**। यदि वृन्दावनं व्यापिवैकुण्ठ एव स्यात् तदा न काचिच्चिन्ता। भूमौ तद् वर्तत इति केवलं भूमेः कीर्तिमेव करोति। अन्या भूर्यत्र वृन्दावनमस्तीति भगवतो नित्यस्थितिममन्यमानाया वचनम्। पदानि त्वाधिदैविके नित्यान्येव स्थास्यन्ति। मद्दर्शयिष्यति च कश्चिद् भगवांस्त्वपराधीन इति न तत्सद्भावे वृन्दावनस्य सामर्थ्यम्। भक्तेः सर्वत्रैव तथात्वान्न वृन्दावनप्रतिष्ठा भवतीति प्रतिष्ठाया निमित्तमाह **यद् देवकीसुतपदाम्बुजलब्धलक्ष्मीति**। यद् यस्मात् तद् वनं देवक्याः पुत्रस्य पदाम्बुजानां लक्ष्माणि चिह्नानि ध्वजवज्रादीनि तैर्लब्धा लक्ष्मीर्येन। स्वस्य स्वच्छन्दसम्बन्धार्थं देवकीसुतपदप्रयोगः। नन्दगोपसम्बन्धिनी सा। देवक्याः प्रसूतिमात्रं न त्वन्यदिति सुतपदम्। स्त्रीप्राधान्यात् स्त्रीषु

वृन्दावनं सखीत्यस्याभासे—चरणानां स्वरूपमाहेति। अत्रेदमाकूतमिति मे भाति। भगवच्चरणमाहात्म्यं सर्वश्रुतिप्रतिपादितम्। तदेव 'देवानां पादा' इत्युपक्रम्य 'तस्या भाग्याभिनन्दन' मित्यन्तेनोक्तम्। तथा चैतादृक्पदसम्बन्धाद् वृन्दावनस्वरूपमुत्तमत्वेन निरूपितं भवति। तत् कथमुक्तमत्र विहारनिरूपणेन चरणानां तथेति? अत्रेदमाकूतम्। लोकवेदातीतशुद्धपुष्टिमार्गीयलीलासामग्री हि नान्यत्र प्रसिद्धा। एवं सति तत्कृतापि तथेति सिध्यति। अत एव 'वृन्दावनाद् गतो दूर'मित्यग्रे वक्ष्यति। यतस्तत्र पुष्टिलीलानङ्गीकारो वक्ष्यते। एवं तदन्वयव्यतिरेकाभ्यामियं लीलात्रैवेति फलिष्यति। एवं सति यत्रैव शुद्धपुष्टिमार्गाङ्गीकारस्तत्रैवैतच्चरणलीलेति ज्ञेयम्। अत एव वृहद्वनेऽपि 'प्रेक्षयन्त्य उज्झितगृहा जगृहुः' 'सहरामो व्रजस्त्रीणां चिक्रीडे जनयन् मुदम्' 'कृष्णस्य गोप्य' इत्यादिनैवमेवोक्ता। कालीयशिरोनृत्ये नैतच्चरणप्राकट्यं तत्र पुष्टिलीलाया अनङ्गीकारात्। अत एव तत्स्तुतिरपि तादृशी। अतो यत्र शुद्धपुष्टिमार्गीयभक्तिमार्गप्रकटनं लीलायां तत्रैतच्चरणारविन्दाविर्भाव इति ज्ञेयम्। अतः सूक्तं चरणानां स्वरूपमाहेति। असाधारणधर्मनिरूपणे धर्मिनिरूपणसम्पत्तिवत्। यतो लीलैव तत्परिचायिका। एवं सति 'देवानां पादा' इत्यारभ्य 'धिदैविकावानन्दरूपा' वित्यन्तेन यावन्ति चरणरूपाण्युक्तानि तदतीतत्वमेतच्चरणयोर्ज्ञापितं भवति। उक्तेषु पुरुषोत्तमो लोकवेदप्रथितो ज्ञेयः। अयं तदतीत ज्ञेयः ॥ १० ॥

---

१ °परेतयादिपाठोऽपि। २ ईर्ष्ययेत्यपि पाठः। ३ पदाम्बुजानि लक्ष्माणीत्यपि पाठः। तदा °लक्ष्यलक्ष्मीति मूलपाठो लक्षणा वा। लक्ष्मलक्ष्मीति वा पाठः।

कृपापि सूचिता । पुष्टिमार्गे तासां प्राधान्यमित्यवोचाम । भक्तिमार्गे चरणौ प्रधानभूतौ तत्राप्यम्बुजं जलोद्भूतं स्त्रीणामेव हृदये तापहारकत्वेन शोभते । तादृशस्यापि या ध्वजवज्राङ्कुशादिशोभा सा नान्यत्र फलति । वृन्दावने सा प्रतिफलितेति पादत्वमेव सम्पन्नमतो लक्ष्मीरपि तत्र नियता । अतः पदाम्बुजैर्लब्धा लक्ष्मीर्येनेति । भूमिर्यदि सान्द्रा तदैवं भवतीति भूमिकृतैव सा लक्ष्मीप्राप्तिरतो युक्तं च भूमेःकीर्तिं स्थापयतीति । किञ्च न केवलं लक्ष्मीरेव प्राप्ता किन्तु भक्तिज्ञाने अपि प्राप्ते इत्याह गोविन्देति । यदा भगवान् वेणुनादं करोति तदा नीलमेघो गर्जतीव भाति । ततो मयूरा मत्ताश्च भवन्ति । ततो नृत्यन्ति । यदैव भगवता वेणुनादः क्रियते तदैव देहविस्मरणं नृत्यं च जायत इति भक्त्युद्रेक उक्तः । मयूरा वनमेवेति वृन्दावनप्रशंसा । तादृशं नृत्यं प्रेक्ष्याद्रिसानुष्ववरतानि तूष्णीं स्थितान्यन्यानि सर्वाण्येव सत्त्वानि यत्र । समगवद्भक्तिज्ञानात् तेषां तूष्णीम्भावलक्षणं ज्ञानमुक्तम् ।[1] एको भक्तोऽन्ये सर्वे ज्ञानिनः । नन्वधोविलेशयाः स्वभावतः कथं ज्ञानिनो भविष्यन्ति ज्ञानस्य फलमूर्ध्वगमनमित्याशङ्क्याहाद्रिसानुष्विति । यत्र कापि स्थितास्तत्रैव गत्वा पश्यन्तस्तिष्ठन्तीति दोषाभावः । स्वस्थानत्याग ऊर्ध्वगमनं चोक्तम् ॥ १० ॥

वृन्दावनमित्यत्र–'वृन्दारण्य'मित्यादेरयं विमर्श इतिज्ञापनाय तत्स्वरूपं विवरीतुमाहुर्देवानामित्यादि । तात्पर्यं तु टिप्पण्यामेव स्फुटम् । ईर्ष्ययेत्यादि । एतेनेयं तामसभक्तोक्तिरितिसिद्धान्तो ज्ञापित. । तेन प्रथमे निर्गुणोक्तिर्ज्ञेया । नित्यस्थितिमिति । स्वहृदीत्यर्थात् । नन्वेतद् वृन्दावनपि तुल्यमिति नात्रेर्ष्यावकाश इत्यत आहुः पदानीत्यादि । नन्वेव सति प्रदर्शनस्य कादाचित्कत्वस्य वृन्दावने तौल्यात्रेर्ष्यावकाश इति तद्बीजं व्यक्तीकर्तुमाहु प्रतिष्ठाया इत्यादि स्थापयतीत्यन्तम् । मूले 'पद'शब्दस्यैव सत्त्वाद् विमर्शाम्बुजपदं चरणचिह्नमात्रोपलक्षकमित्याशयेनात्र बहुवचनम् । समासस्तु सप्तमीतत्पुरुष । तथा च पदे प्रतिफलिते यान्यम्बुजानि लक्ष्माणीत्यर्थः । यद्वात्र मयूरव्यंसकादिसमास इत्याशयेनाहुर्भूमिर्यदीत्यादि । एतेन स्वस्य तथाभानाभावात् तदस्थापनमिति दैन्यद्योतनान्निर्गुणोक्तित्वमपि साधितम् । किञ्चेत्यादिनापीर्ष्या दैन्य एव सूच्यत इति विभावनीयम् ॥ १० ॥

वृन्दावनमित्यत्र–'वृन्दारण्यं स्वपदरमण'मित्यादेरयं विमर्श इतिज्ञापनाय तत्स्वरूपं विवरीतुमाहुर्देवानामित्यादि । तात्पर्यं त्वेतदाभासे टिप्पण्यामेवाहुरन्येत्यादि । मे भातीति । आशङ्कारूप मम भाति । अत्र समाधानं स्फुटीकुर्वन्त्यत्रेदमित्यादि । तत्र पुष्टिलीलाया अनङ्गीकारादिति । दुष्टदमनार्थे तस्मिन् नृत्ये सङ्कर्षणलीलासाङ्कर्येण तथात्वात् । नन्वत्र लीलास्वरूपमेव विविक्तं सिध्यति न तु चरणानामित्यत आहुरसाधारणेत्यादि । सिद्धमाहुरेवं सतीत्यादि । सुबोधिन्यां तस्या ईति । वृन्दाया । ईर्ष्ययेत्यादि । एतेनेयं तामसभक्तोक्तिरितिसिद्धान्तो ज्ञापित । तेन प्रथमे निर्गुणोक्तिर्ज्ञेया । नित्यस्थितिमिति । स्वहृदीत्यर्थात् । नन्वेतद् वृन्दावनेपि तुल्यमिति नात्रेर्ष्यावकाश इत्यत आहु. पदानीत्यादि । नन्वेवं सति प्रदर्शनस्य कादाचित्कत्वस्य वृन्दावने तौल्यात्रेर्ष्यावकाश इति तद्बीजं व्यक्तीकर्तुमाहु प्रतिष्ठाया इत्यादि स्थापयतीत्यन्तम् । व्याख्येय 'पद'शब्दस्यैव सत्त्वाद् विमर्शाम्बुजपदं चरणचिह्नमात्रोपलक्षकमित्याशयेनात्र बहुवचनम् । समासस्तु सप्तमीतत्पुरुषः । तथा च पदे प्रतिफलिते यान्यम्बुजानि लक्ष्माणीत्यर्थं । यद्वात्र मयूरव्यंसकादिसमास इत्याशयेनाहुर्भूमिर्यदीत्यादि । एतेन स्वस्य तथाभानाभवात् तदस्थापनमिति दैन्यद्योतनान्निर्गुणत्वोक्तित्वमपि साधितम् । किञ्चेत्यादिनापीर्ष्या दैन्य एव सूच्यत इति विभावनीयम् । मयूरा वनमेवेति । वनस्थत्वाद् वनम् प्रशंसेति । भक्तिमत्त्वात् प्रशंसा ॥ १० ॥

१ स्थापयतीतिपाठोपि । २ अनार्द्रत्वात् । ३ पद– ।

धन्यास्तु मूढमतयोऽपि हरिण्य एता या नन्दनन्दनमुपात्तविचित्रवेषम्।
आकर्ण्य वेणुरणितं सहकृष्णसाराः पूजां दधुर्विरचितां प्रणयावलोकैः ॥११॥

एवं रूपवर्णनामुक्त्वा पोढा वेणुं वर्णयन्ति धन्यास्त्वितिषड्भिः।

हरिण्योऽप्सरसो गावः पक्षिणो नद्य एव च। मेघाश्चेतिक्रमेणैव कृष्णैश्वर्यादिबोधकाः ॥१॥
ईश्वरः पूज्यते लोके मूढैरपि यदा तदा। निरुपाधिकमैश्वर्यं वर्णयन्ति मनीषिणः ॥२॥
वीर्यं देवेषु तत्रापि स्त्रीषु तत्रापि कामतः। सान्निध्ये पुरुषाणां च मूर्च्छा तेन ततो महत् ॥३॥
यशो यदि विमूढानां मत्पक्षासक्तिवारणात्। स्वधर्मं योजयेत् तेषु तदा भवति नान्यथा ॥४॥
तामसा राजसाश्चान्ये गुणातीताश्च रूप्यते। वृन्दावनं गुणातीतं मुनयश्चापि पक्षिणः ॥५॥
गोवर्धनश्च त्रितयं गुणातीतमिह स्थितम्। तद्गताश्चापि लोकेऽस्मिन् गुणातीता भवन्ति हि ॥६॥

"यदा खलु वै पुरुषः श्रियमश्नुते वीणास्मै वाद्यत" इति श्रुतिन्यायेन सर्व एव विहगा भगवदीया अपि परमां श्रियं प्राप्नुवन्ति।

श्रियो हि परमा काष्ठा सेवकास्तादृशा यदि। ज्ञानोत्कर्षस्तदैव स्यात् स्वभावविजयो यदि ॥७॥
हरेश्चरणयोः प्रीतिः स्वसर्वस्वनिवेदनात्। उत्कर्षश्चापि वैराग्ये हरेरपि हरिर्यदा ॥८॥
भक्त्या च तादृशत्वं च सा सेवा सेवकोचिता ॥८½॥

तत्र प्रथमं हरिणीनां भाग्यमभिनन्दन्ति धन्या इति। ज्ञानं हि क्रियाविशेषणीभूतम्। क्रियोत्कर्षः पूजायाम्। सापि चेज्ज्ञानमयैर्द्रव्यैर्भगवद्विषयिणी भवति। भगवज्ज्ञानं स्वज्ञानं च तस्या अप्यङ्गम्। तदभावे सर्वं व्यर्थम्। यद्यन्यत्रापि तद् भवेत् तदा तदेवोत्तममिति-पक्षमाश्रित्य पूर्वपक्षं व्यावर्तयन्ति धन्यास्त्विति। तुशब्देन स दोषो न ज्ञायत इत्याशङ्कां परिहरन्त्य आहुर्मूढमतयोऽपीति। स्त्रीणामेवाभिनन्दनं प्रकरणाद्धरिणानां स्त्रियोऽत्र विवक्षिता हरिण्यः। सर्वत्रान्या एव वर्णयन्तीति ज्ञातव्यम्। स्वस्याकृतार्थताभावनया दैन्याविर्भावे भगवान् कृपया वर्ण्यमानसर्वसामग्रीसहितः प्रकटीभूत इति ज्ञापयितुमेता इत्युक्तम्। तासां भाग्ये हेतुमाहुर्या नन्दनन्दनं निरीक्ष्य वेणुरणितमाकर्ण्य भगवत्कृतैः प्रणयावलोकैर्विरचितां पूजां स्वस्मिन् दधुरिति। या इति। पूर्वं भगवदुक्ताः प्रसिद्धाः। नन्दमप्यानन्दयतीति नन्दनन्दनः। भक्तोद्धारार्थमेव ब्रह्मवाक्यात् प्रवृत्तः। उद्धारप्रकरणात् ता अप्युद्धरिष्यतीति उपात्तः स्वीकृतो विचित्रो वेषो येन। अनेन रसाभिनयार्थं प्रवृत्तो भगवानुक्तः। एवं स्वरूपतस्तत्कार्यकर्तृत्वं साधनतश्च फलमुखं कर्तृत्वमुक्तम्। विचित्रपदेन सर्व एव रसाः परिगृहीताः। समीपे स्वीकारो ब्रह्मानन्दस्य तत्र प्रवेशनार्थः। आकर्ण्येत्येव क्रिया वेणुरणिते भगवति चार्पितः शब्दतश्च। पशुदृष्टिविशेषं न गृह्णातीति शास्त्रदृष्टिरुक्ता। पश्चाज्जायमानापि प्रत्यक्षदृष्टिरन्यानुरोधिनीति विद्यमानापि सा न गणिता। तदाहाकर्ण्येति। वेणो रणितं सर्वरसासाधारणम्। यथा रसो बाह्यतो न गच्छति तथाशब्दविशेषो रणितम्। तादृशमपि निकटे गत्वा श्रुतवत्यः। अनेन दैहिका धर्मा निवर्तिताः। सहकृष्णसाराः स्वभर्तृसहिताः। अनेन भर्तृनिरोधोऽपि परिहृतः। सापत्न्याभावश्च कृष्णसारा इत्यनेन। कृष्ण एव सारो येषामिति कृष्णसाराः। अनेन गोपास्तथा न भवन्तीति स्वस्यातथात्वं सूचितम्। अन्यथास्माभिरपि सह गोचारणं कुर्युः। अत एतेऽभिमानसारा एव। धन्यास्ते कृष्णसाराः।

---

१. वीक्ष्येत्यपि पाठः।

स्नेहपूर्वकावलोकनैर्विरचितां भगवतिपूजां धारयामासुः । नेत्राण्येव कमलानि ज्ञानवासितानि ज्ञानोद्भवस्थानानि । तत्र पूजा सर्वोत्तमा तस्याश्च धारणं ततोपि । कृतिरर्थादेवोक्ता । भगवता च प्रतिपूजितमात्मनि वा दधुः । सदयावलोकैरिति वा पाठः । एतावदेव कर्तव्यं प्राणिनां भगवतश्च ॥ ११ ॥

धन्यास्त्वित्यत्र—स दोषो न ज्ञायत इति । दोषस्वरूपमाहुर्न ज्ञायत इति । मृगीभिर्भगवत्स्वरूपं श्रुत्यादिप्रतिपाद्यत्वेन न ज्ञायत इतिलक्षणो दोष इत्यर्थः । पूजां दधुरित्यत्र—तस्याश्च धारणं ततोपीति । सर्वोत्तममितिशेषः ॥ ११ ॥

धन्या इत्यत्र—कारिकाद्य ततो महदिति । उत्कैश्वर्यान्मर्यादामार्गीयवीर्याच्चेत्यर्थः । अन्य इति । सात्त्विकाः । पक्षिनिरूपकप्रसङ्गतो वृन्दावनगोवर्धननिरूपकाणां गुणातीतत्वे हेतुमाहु रूप्यत इत्यादि । हिंदतौ । यतो हेतोर्वृन्दावनादि त्रयमिह व्रजे स्थितं गुणातीतं रूप्यते शोभादासक्तिभरामैश्वर्यादतो हेतोस्तद्गता अप्यस्मिँल्लोके भक्तसमाजे गुणातीता भवन्तीत्यर्थः । समानशीलत्व एव रत्युदयादितिभावः । उत्कर्षश्चापि वैराग्य इति । 'तदैव रथा'दितिपूर्वेणान्वयः । ननु सर्वदुःखहर्तरि दुःखस्यासम्भवदुक्तिकत्वादसङ्गतमिदमित्याशङ्कायामाहुर्मन्यस्येत्यादि । चरत्त्वर्थेत्रधारणे । तादृशत्वं चेत्यनेन स्वसर्वस्वनिवेदनं समुच्चीयते । तत्र 'कुसुमावली'पदात् सिद्धं भक्तिश्च 'सखि'पदादिति ज्ञेयम् । विहृतौ पूर्वपक्षमिति । 'ज्ञानं ही'त्यारभ्य 'व्यर्थ'मित्यन्तोक्तमित्यर्थः । स्त्रीणामित्यादि । मूढमतित्वादिकं कृष्णसारेष्वपि तुल्यमिति तद्वारणायेदमुक्तम् । हरिणानां स्त्रिय इति । न तु नायिकाविशेषाः । भगवतः पूजाधारणे गमकमाहुर्या इत्यादि । पूर्वमिति । द्वादशाध्याये 'नृत्यन्त्यमी'त्यादिश्लोके । तत्कार्यकर्तृत्वमिति । उद्दीपकानुकूलरसकार्यकर्तृत्वम् । तत्रेति । हरिणीष्वित्यर्थः । नन्दनन्दनं निरीक्ष्येति यदुक्तं तन्मूले नास्तीत्याशङ्क्य 'कर्ण्य'त्यस्य तात्पर्यार्थमाहुराकर्ण्येत्येवेत्यादि । तथापि साक्षात्कारः कथमायातीत्यत आहुः पदिवत्यादि ॥ ११ ॥

धन्या इत्यत्र—कारिकाद्य ततो महदिति । उत्कैश्वर्यान्मर्यादामार्गीयवीर्याच्चेत्यर्थः । अन्य इति । सात्त्विकाः । पक्षिनिरूपकप्रसङ्गतो वृन्दावनगोवर्धननिरूपकाणां गुणातीतत्वे हेतुमाहु रूप्यत इत्यादि । हिंदतौ । यतो हेतोर्वृन्दावनादि त्रयमिह व्रजे स्थितं गुणातीतं रूप्यते शोभादासक्तिभराच्चेत्यर्थादतो हेतोस्तद्गता अप्यस्मिँल्लोके भक्तसमाजे गुणातीता भवन्तीत्यर्थः । समानशीलत्व एव रत्युदयादितिभावः । उत्कर्षश्चापि वैराग्य इति । 'तदैव रथा' दितिपूर्वेणान्वयः । ननु सर्वदुःखहर्तरि दुःखस्यासम्भवदुक्तिकत्वादसङ्गतमिदमित्याशङ्कायामाहुर्भञ्चयेत्यादि । चरत्त्वर्थेत्रधारणे । तादृशत्वं चेत्यनेन स्वसर्वस्वनिवेदनं समुच्चीयते । तदत्र 'कुसुमावली'पदात् सिद्धं भक्तिश्च 'सखि'पदादिति ज्ञेयम् । विहृतावन्यत्रापि तदिति ज्ञानरहितेष्वपि तादृशं पूजनम् । पूर्वपक्षमिति । 'ज्ञानं ही' त्यारभ्य 'व्यर्थ' मित्यन्तोक्तमित्यर्थः । स दोषो न ज्ञायत इत्यस्यार्थं टिप्पण्यामाहुर्मृगीभिरित्यादि । सुबोधिन्यां स्त्रीणामित्यादि । मूढमतित्वादिकं कृष्णसारेष्वपि तुल्यमिति तद्वारणायेदमुक्तम् । हरिणानां स्त्रिय इति । न तु नायिकाविशेषाः । भगवतः पूजाधारणे गमकमाहुर्या इत्यादि । पूर्वमिति । द्वादशाध्याये 'नृत्यन्त्यमी शिखिन ईड्य मुदा हरिण्यः कुर्वन्ति गोप्य इव ते प्रियमीक्षणेने'त्यत्र । तत्कार्यकर्तृत्वमिति । उद्दीपकानुकूलरसकार्यकर्तृत्वम् । तत्रेति । हरिणीष्वित्यर्थः । नन्दनन्दनं निरीक्ष्येति यदुक्तं तन्मूले नास्तीत्याशङ्क्य 'कर्ण्य'त्यस्य तात्पर्यार्थमाहुराकर्ण्येत्येवेत्यादि । तथापि साक्षात्कारः कथमायातीत्यत आहुः पदिवत्यादि । चापल्याभावमुपपादयन्ति कृष्णेत्यादिना । ततोपीत्यस्यार्थं टिप्पण्यामाहुः सर्वोत्तममिति । तथा च 'धा'धातोरत्र पोषणार्थत्वं तत्र पूर्वकृतिरपेक्षिता सा चार्थादेवोक्तेत्यर्थः । पूजां दधुरित्यस्यार्थान्तरमाहुर्भगवतश्चेत्यादि । एतावदिति । प्रीतिपूर्वकं निरीक्षणम् । भगवदवलोकनम् । कृपापूर्वकं भगवतो जीवावलोकनम् ॥ ११ ॥

---

१ वीक्ष्येत्यपि पाठः । २ निरन्तरमित्यपि पाठस्तत्र निरीक्षणं शेषः ।

**कृष्णं निरीक्ष्य वनितोत्सवचारुवेषं श्रुत्वा च तत्क्वणितवेणुविचित्रगीतम् ।**
**देव्यो विमानगतयः स्मरनुन्नसारा भ्रश्यत्प्रसूनकबरा मुमुहुर्विनीव्यः ॥ १२ ॥**

अप्सरसामवस्थामाह कृष्णं निरीक्ष्येति । कृष्णपदार्थात् स्त्रीणां निरोधः सूचितः । आनन्दे दृष्ट आनन्दसाधन आसक्त्यभावो युक्त एव । तत्रापि सदानन्दे । नितरामीक्षणं दिव्यदृष्ट्या । स्वजातीयोद्धारार्थमागत इतिविशेषः । तदाहुर्वनितोत्सवचारुवेषमिति । वनितानामेवोत्सवार्थे चारुर्वेषो यस्य । स उत्सवो ह्यनेकविधः । तत्तदुत्सवे ते ते भूषिता भवन्त्युत्सवरसानुभवार्थम् । केवलं वनितानामेवोत्सवो यत्र । वनं यौवनमिताः प्राप्ताः प्राप्तवयः । वनं सञ्जातमिति वा । इतच्प्रत्ययः । न हि तत्र प्रविष्टः पुनरावर्तते । यौ वनमित्यत्रापि 'यु' मिश्रणार्थे वनमिति तासामेवोत्सवो भवत्विति भगवता वेषः कृतः । सर्वाभरणभूषिताः सर्वा एव वनिता यथावेषरसं पुरुषार्थमनुभवन्ति । अनेनास्मिन्नुत्सवे यासामलङ्कारादिनोत्सवो न जातस्तासां वनितात्वं व्यर्थमेव यथा रण्डानाम् । तत्रापि चारु मनोहरमन्तरप्यलङ्कारहेतुः । तत्र प्रेमज्ञानादिकमलङ्काराः । बहिरिवान्तरपि रसानुभवश्च । अनेनाप्सरसां भगवदर्थागमने सर्वोऽप्युपाय उक्तः । अनुभावकं ततोविलम्बेन प्रस्थापकमाह श्रुत्वा चेति । निकटे समागत्य पूर्ववदेव क्वणितस्य श्रवणम् । अत्र वेण्वतिरिक्तकूजितादिक्वणितानां सङ्ग्रहार्थं तस्य भगवतः क्वणितमित्युक्तम् । क्वणितश्च वेणुः । तादृशवेणावाविर्भावं प्राप्तानि विचित्राणि गीतान्याकर्ण्येतिसम्बन्धः । एकेनैव गीतेन मूर्च्छिता जाता इत्येकवचनम् । विचित्राणि सर्वरसार्थानि । शृङ्गार एव सर्वे रसा इति नाट्यशास्त्रसिद्धान्तः । अन्यस्य रसत्वमेव न मन्यन्ते । यथा महान्तः सुवर्णाभरणान्येवोपकरणानि च कुर्वन्ति तथा शृङ्गार एव सर्वरसाः । अन्यथा रसिकानां रुचिर्नोत्पद्येत । अत एव विचित्रं गीतम् । यद्यपि ता देव्यो देवतारूपाः पूज्या एव तत्रापि विमानेनैव गतिर्यासां नापि भोग्या नापि दुःखसहनशीलास्तथापि स्मरेणैव नुन्नः सारो यासां शरीरेन्द्रियापेक्षया मनो बलिष्ठमिति स्मरेण सारो विवेकः सर्वोऽप्यपहृतः । भूमावनागमने पद्भ्यामनागमने स्वतोऽप्यनागमने हेतव उक्ताः । ततो यज्जातं तदाहुर्मुमुहुरिति । न केवलमन्तरेव हृदयप्रदेशे मोहः किन्तूपर्यधश्चेति । भ्रश्यत्प्रसूनानि कबरे यासां विगता नीवी च यासामिति केशनीवीबन्धयोर्विश्लेष आमुष्मिकैहिकफलपरित्यागज्ञापकः । देवतात्वान्न मरणम् । विमानगतित्वान्नाधःपतनम् । विवेकाभावान्नोपायेनागमनम् । भगवदनुपयोगेऽन्यस्यापि रसो नोत्पद्यतामिति रसाभासो वर्णितः । देवसहितानामपि प्रायेणात्रावतीर्णानां केवलानां स्त्रियस्ताः स्वपत्यन्वेषणार्थमागता भगवन्तं दृष्ट्वा पूर्वावस्थां सर्वामेव विस्मृतवत्यो भगवानेव पतिर्भवत्विति । तदास्माकं तथात्वं युक्तमेवेत्यर्थः ॥ १२ ॥

कृष्णं निरीक्ष्येत्यत्र–उपाय उक्तः दिव्यदृष्ट्या दूरादवगत्य भगवदर्थमागमने स उक्त इत्यर्थः । दिव्यदृष्टेः सार्वदिकत्वादिदानीमेव कुत आगमनमित्याकाङ्क्षायां विशेषहेतुं स्फुटीकुर्वन्त्यनुभावकमित्यादि । यद्यपीत्यादिना व्याख्यातस्य तात्पर्यमाहुर्नापीत्यादि । तर्हि किमित्यागता इत्यत आहुस्तथापीत्यादि । अपहारं कार्यद्वारा विवृण्वन्ति भूमावित्यादिना । देवसहिता

कृष्णं निरीक्ष्येत्यत्र–वनमित्यस्मादितचि कर्तरि जाते वनितेति भवति । 'वनिता जातरागस्त्रीभिर्योरि'ति कोशश्च । एतौ च रूढियोगौ लौकिकतद्गणीमात्याचिति तौ विहाय विशिष्टाभिर्दृष्टिभिः स्वाधिकारेण यद् युद्धं यश्च भगवद्रूपागमस्तदुभयमेताभिर्विशिष्टाभिर्वक्ष्यमाणीभिर्ज्ञातमिति बोधयितुमतिपरोक्षवादेन वनितापदयोगानेवाहुर्वनं यौवनमित्यादि । अत्र प्रथम-

---

1. बद्धूदेशा इत्यपि पाठः ।

गावश्च कृष्णमुखनिर्गतवेणुगीतपीयूषमुत्तभितकर्णपुटैः पिबन्त्यः ।
शावाः स्नुतस्तनपयःकवलाः स्म तस्थुर्गोविन्दमात्मनि दृशाश्रुकलाः स्पृशन्त्यः ॥

गवां वत्सानां च चरित्रमाह गाव इति । चकाराद् गावोपि तथा जाताः । उत्तमाधमयोर्मध्यमाभिलापो निरूप्यते । असम्भावितत्वान्मोहः । ता हि वेणुमात्र आसक्तास्तथा कुर्वन्तीतिशङ्कां परिहर्तुमाहुः कृष्णमुखेति । कृष्णमुखान्निर्गतं यद् वेणुगीतम् । ननु बहूनां वादने मुखादर्शन इतरवैलक्षण्यानवधाने कथं भगवन्मुखवेणुगीतमिति ज्ञायते ? तत्राह पीयूषेति । अमृतं हि तत् । तेन व्यञ्जकान्तराभावेपि स्वत एव ज्ञायते । सदानन्दो वाच्यः । मुखं वागधिपतिः । निर्गमनं वाक् । वेणुरितरविस्मारकः । गीतं षड्गुणात्मकम् । अतः सर्वा सामग्री वक्तुमेतावदुक्तम् । अन्यथा 'कृष्णगीतपीयूष'मित्येव वदेयुः । इतरगीतपीयूषनिवृत्त्यर्थं कर्णानामुत्तम्भनम् । प्रतिक्षणं नूतनकर्णत्वात् । प्रत्येकपक्षेपि बहुवचनं सङ्गच्छते । पुटशब्देन तदर्थमेव कर्णसम्पादनमिति ज्ञापितम् । न हि पर्णपुटे पुनः कार्यान्तरं भवति । चषकादिकं तु बह्वर्थं भवेत् । पुटानां बहुत्वं प्रतिक्षणं नूतनरसतां बोधयति । व्यवस्था तु पूर्वोक्तैव । शावा बालकाः हरिणादीनामन्यजीवानां गवामेव वा अतिबालका घोषे वा । स्नुतं स्तनात् पयःकवलरूपं येषाम् । न तस्य पयसोन्तःप्रवेशः । इदं सन्दिग्धमितिप्रमाणमाहुः स्मेति । तस्थुर्गावः शावाश्च । उभयेषामपि तथात्वे हेतुमाहुर्गोविन्दमात्मनि दृशाश्रुकलाः स्पृशन्त्य इति । तासां न बहिःसंवेदनं यतोन्तर्भगवन्तं स्पृशन्ति । तत्रापि दृशावृत्तचक्षुषा भगवन्तं स्पृशन्त्य इति न भावनामात्रं किन्त्वाविर्भूत इति ज्ञापितम् । अन्यथा कथं तुल्यता स्फुरति ? बहिरदर्शने हेतुरश्रुकला इति । अश्रूणां कला यासाम् । गोविन्दपदं गवां हृदय आविर्भावे दोषाभावार्थं यतोयं तेषामेवेन्द्रः ॥ १३ ॥

कृष्णमुखनिर्गतेत्यत्र–मुखं वागधिपतिरित्यादि । अत्रायं भावः । पूर्वश्लोके देवस्त्रीणां मोह एवोक्तो वस्तुसामर्थ्यान्न तु रसपानमपि । गवां भगवदीयत्वाद् भगवत्सङ्गतत्वात् प्रियत्वाच्च रसपानमपीति[1] । केवलानां तासां विमानगतिप्रसिद्ध्यभावात् तथैवाशयः । तथापि मूले देवपदाभावादरुच्या पक्षान्तरमाहुः प्रायेणेत्यादि । अस्मिन् पक्षेवतीर्णानां गोपानामेव पुरुषत्वं बोध्यं तेन न कारिकाविरोधः । अस्माकमिति । तदर्थमेवावतीर्णानामित्यर्थः ॥ १२ ॥

पक्ष वर्णद्वयत्वापत्तिर्द्वितीये 'यौ' इत्येकस्यैव । सा च 'वर्णागमो वर्णविपर्ययश्च तथापरौ वर्णविकारनाशौ'-विद्युक्तत्वेन पृषोदरादित्वाज्ज्ञेया । योगप्रयोजनमाहुर्न हीत्यादिना । तथा च इदंभिः स्वस्य स्थिरयौवनत्वं त्रिदशत्वान्निश्चित्य तेन भावेन स्वस्याप्युरसवयोग्यता ज्ञाता भगवता तु स्थिरतादृग्भावविशिष्टस्थिरयौवनानामर्थे कृते इति तासां मोह इति वक्त्रीभिर्ज्ञातमिति भावः । योगान्तरमाहुर्यौवनमित्यादि । योगद्वयार्थं सङ्गृह्य सिद्धमाहुस्तासामेवेत्यादि । उपाय उक्त इति । दिव्यदृष्ट्या दूरादवगत्य भगवद्दर्शनागमने स उक्त इत्यर्थः । दिव्यदृष्टेः सार्वदिकत्वादिदानीमेव कुत आगमनमित्याकाङ्क्षायां विशेषहेतुं स्फुटीकुर्वन्त्यनुभावकमित्यादि । यद्यपीत्यादिना व्याख्यातस्य तात्पर्यमाहुर्नापीत्यादि । तर्हि किमित्यागता इत्यत आहुस्तथापीत्यादि । अपहारं कार्यद्वारा विवृण्वन्ति भूमावित्यादिना । देवसहिता[2] अपीति । केवलानां तासां विमानगतिप्रसिद्ध्यभावात् तथैवाशयः । तथापि मूले देवपदाभावादरुच्या पक्षान्तरमाहुः प्रायेणेत्यादि । अस्मिन् पक्षेवतीर्णानां गोपानामेव पुरुषत्वं बोध्यते तेन न कारिकाविरोधः । अस्माकमिति । तदर्थमेवावतीर्णानामित्यर्थः ॥ १२ ॥

---

१. °निष्पादनमित्यपि पाठः

१. यम इतिशेषः । २. देवसहिताः ।

पानमुच्यते । तत्र सुरस्त्रीणां यत्र तथात्वं तत्रैतासां पशुजातीयत्वेन तदसम्भावितमित्याशङ्कानिरासाय नेदं साधारण्येन गानं किन्तु यथैतासामपि रसानुभवो भवति तथा सर्वसामग्रीप्रकटनपूर्वकमिति ज्ञापनायेति । अत एवाग्रे हृदि प्राकट्यं स्पर्शश्चोक्तः । आधिदैविकसम्बन्धमात्रेण यत्राध्यात्मिकाधिभौतिकयोरपि कार्यकरणसामर्थ्यं तत्र साक्षादाधिदैविकस्यैव करणत्वे किं वाच्यं कार्यसम्पत्ताविति वागधिपतित्वाद्युक्तेस्तात्पर्यम् । एतेन शब्दनिष्ठरसप्राप्तौ साधनसम्पत्तिरुक्ता भवति । किञ्च वाच्यार्थाज्ञाने रसस्वरूपाज्ञानात् तत्कार्यासम्भव इतिशङ्का कृष्णपदार्थोक्त्या निरस्ता । स्वरूपात्मकत्वादर्थस्य स्वत एव प्रकटत्वात्तज्ज्ञानसाधनानामनपेक्षणाद् बलवत्त्वाच्च न पशुत्वादिकं प्रतिबन्धकमतः सर्वमवदातम् । अपरञ्च कृष्णमुखान्निर्गतस्य तत्रापि परम्परासम्बद्धस्य पीयूषस्य यत्रैतादृशत्वं तत्रापि पशुषु तत्र साक्षान्मुखपानकर्त्रीषु किं वाच्यमित्युत्कण्ठाज्ञापनायापि निर्गमनाद्युक्तिरिति ज्ञेयम् । अन्यच्च मुखस्याभिन्नत्वेन साक्षात्तत्पानकर्त्रीणां कदाचित् तत्पीयूषं तापमप्युत्कटं जनयति । इदं तु तस्मान्निर्गतत्वेन सदैवानन्दजनकमेव न तु तथा । तस्माद् भिन्नत्वेन परम्परासम्बन्धाच्च तद्धर्मासम्भवात् । अत एव साक्षात्सम्बन्धानन्तरं यादृशस्तापस्तादृशो न पूर्वं किन्तु सहजसम्बन्धात् तदुद्भवत्वस्यापि सहजत्वात् कश्चन तापं जनयतीतिज्ञापनायैतावदुक्तमिति । प्रतिक्षणं नूतनकर्णत्वादिति । पुटत्वोक्त्या तत्र यथैकेन रसेन पूर्णे द्वितीयरसावकाशो न सम्भवति तथैकैकक्षणसम्बन्धित्वादरसस्यामितत्वात् तेन पूर्णे पुटे द्वितीयादिक्षणसम्बन्धिनां तेषां प्रवेशासम्भवात् तत्पानार्थं द्वितीयादिपुटापेक्षावश्यकीति तथात्वम् । अन्यथा करणाभावेन नादग्रहणासम्भवाद् द्वितीयादिपानमेव न भवेत् । अत्रैवं ज्ञेयम् । भगवत्सम्बन्ध्यर्थो न लौकिकेन्द्रियग्राह्यः किन्त्वलौकिकैरेव तैः प्रभुदित्सा च तत्र हेतुः । तथा च तयैव तावत्साधनसम्पत्तिर्भवतीति नानुपपत्तिः काचित् ॥१३॥

गाव इत्यत्र-तथा जाता इति । मोहिता जाता इत्यर्थः । मोहे हेतुमाहुरुत्तमाधमयोरित्यादि । सात्त्विकतामसयो राजसदेहाभिलाष इत्यर्थः । नन्वयं मोहो नोक्तहेतुकः किन्तु हेत्वन्तरादित्याशङ्कते ता इत्यादि । तर्हि कृष्णगीतपीयूषमित्येव वाच्यं नत्वधिकमित्याकाङ्क्षायामाहुः सदानन्देत्यादि । निर्गमनं वागिति । पूर्वमासन्यरूपस्य निर्गमदशायामेव वैखरीत्वेन तदेव सेत्यर्थः । मुखं वागित्यादेस्तात्पर्यं टिप्पण्यां स्फुटम् । नन्वेवं प्रतिक्षणनूतनत्वे रसस्य निरपत्वहानिरिति तत्परिहारायाहुर्व्यवस्थेत्यादि । 'चूतप्रवाले'तिश्लोक एव कारिकाभिः स्फुटीकृतेति प्रणालीविशेषेणाविर्भावप्रकारभेदेपि न निरपत्वहानिरित्यर्थः । नन्विदं सर्वमाविर्भावे सङ्गच्छते तत्रैव किंमानमित्याकाङ्क्षायां मूलाशयमाहुर्भगवन्तमित्यादि । तथा च स्पर्शान्यथानुपपत्त्यैवाविर्भावसिद्धिरितिभावः । उपचारव्युदासाय कार्यद्वारापि परिचाययन्त्यन्यथेत्यादि । उक्तमोदप्रयोजिका स्वस्य भगवत्तुल्यतेत्यर्थः ॥ १३ ॥

गाव इत्यत्र-तथा जाता इति । मोहिता जाता इत्यर्थः । मोहे हेतुमाहुरुत्तमाधमयोरित्यादि । सात्त्विकतामसयो राजसदेहाभिलाष इत्यर्थः । नन्वयं मोहो नोक्तहेतुकःकिन्तु हेत्वन्तरादित्याशङ्कते ता इत्यादि । तर्हि कृष्णगीतपीयूषमित्येव वाच्यं न त्वधिकमित्याकाङ्क्षायामाहुः सदानन्देत्यादि । निर्गमनं वागिति । पूर्वमासन्यरूपस्य निर्गमदशायामेव वैखरीत्वेन तदेव सेत्यर्थः । मुखं वागित्यादेस्तात्पर्यं टिप्पण्यां स्फुटम् । नन्वेवं प्रतिक्षणनूतनत्वे रसस्य निरपत्वहानिरिति तत्परिहारायाहुर्व्यवस्थेत्यादि । 'चूतप्रवाले'तिश्लोक एव कारिकाभिः स्फुटीकृतेति प्रणालीविशेषेणाविर्भावप्रकारभेदेपि न निरपत्वहानिरित्यर्थः । नन्विदं सर्वमाविर्भावे सङ्गच्छते तत्रैव किं मानमित्याकाङ्क्षायां मूलाशयमाहुर्भगवन्तमित्यादि । तथा च स्पर्शान्यथानुपपत्त्यैवाविर्भावसिद्धिरितिभावः । उपचारव्युदासाय कार्यद्वारापि परिचाययन्त्यन्यथेत्यादि । उक्तमोदप्रयोजिका स्वस्य भगवत्तुल्यतेत्यर्थः ॥ १३ ॥

---

१. यथैवैता° स्यपिपाठः । २. प्रकटत्वाज्ज्ञान° स्यपि पाठः । ३. °दि तत्त्वादित्यपि पाठः ।

पूर्णाः पुलिन्द्य उरुगायपदाब्जरागश्रीकुङ्कुमेन दयितास्तनमण्डितेन।
तद्दर्शनस्मररुजस्तृणरूषितेन लिम्पन्त्य आननकुचेषु जहुस्तदाधिम् ॥१७॥

...ज्ञानाभावाचासम्भ॥

...प्राय इति। एता निर्गुणाः। अत एव यशोदया रु८। भगवन्नैकट्यात् तासामपि भक्तिसाधनस्य रत्नानां सङ्ग्रह एवमेवोत्तमकन्यकानामपि। द्रव्येण क्रीता...भगवच्चरणारविन्दरजस्सदानार्थे। ता यशोदानन्दगोपकुमारिका अम्बेत्याहुः। सिद्धवनिरूपणे का ...स्य पदाब्जं भवेदतः प्राय इत्याहुः। प्रायः प्रायेण। बत इति खेदे कथमेतादृशीं योनिं प्राप्ता इति। हर्षे वा। साधु तैरयमुपायः कृत इति। अम्बेतिसम्बोधनं दयार्थम्। भगवदाविर्भावादिति केचित्। अतस्तासां वाक्याद् विहगा मुनय एव बाहुल्येन। ते हि मुनयो मननशीला जानन्त्यत्र भगवानाविर्भविष्यतीति। अत एवास्मिन् वने कृष्णेक्षणाः कृष्णार्थमेव क्षणो येषां कृष्ण एव वेक्षणं येषाम्। *भगवन्तं पश्यन्त एव तदुदितं कलवेणुगीतं द्रुमभुजानारुह्य शृण्वन्ति।* यावद् भगवतो वेणुनादो न श्रुतस्तावद् रूपमेव पश्यन्तः स्थिताः। यदा पुनर्वेणुनादमारब्धवांस्तदोभयं कृतवन्तः। यदा पुनस्ततो भगवान् दूरे गतस्तदोड्डीयान्यत्रगमने वेणुनादरसो गमिष्यतीति तत्रैव स्थिताः। कदाचित् स रसो रसान्तरमुत्पादयिष्यति रसान्तरेण वा प्रतिबन्धो भविष्यतीति नाशङ्कनीयम्। यतः कलमव्यक्तमधुरं वेणुगीतम्। ततो भगवत सकाशादुदितं नादब्रह्मात्मकम्। वेणुरप्यव्यक्तमधुरस्ततो मधुर एव रस उत्पद्यत इति। गीतं वा भगवदुक्तपरमार्थप्रतिपादकम्। तदा तदुदितमितिविशेष्यम्। वेदशाखा इव द्रुमभुजानारुह्य पतनपारणादिशङ्काभावान्निश्चिन्ताः शृण्वन्ति। मनसो विषयान्तरसञ्चाराभावाय भगवति दूरे गते दर्शनाभावान्मननाभ्यासाच मीलितदृशो जाताः। विशेषेण गता अन्यविषयिका वाचो येभ्यः। भगवदुपयोगित्वागत्यागज्ञापनायान्यपदम्। एतच सार्वदिकमिति ज्ञेयम्। अन्यथा श्रवणकाले वाचस्तत्प्रतिबन्धकत्वेनैवाभावः सिद्ध इति तदुक्तिर्निरर्था स्यात्। तथा च सदैतद्रसानुभवो हृदीति ज्ञापितं भवति। एतेनास्य नादस्यालौकिकत्वं दुर्लभत्वं च सूच्यते। न हि मुनीनामतादृशेऽर्थे आसक्तिः सम्भवति। तेषां शरादिभयाभावार्थमाह रुचिरप्रवालानिति। पल्लवा उत्तमाः। कोमलपत्राण्याम्रादिस्थितानि दृष्टिमुद्रणेऽपि हेतुः। अन्यथा मरालदर्शनं स्यात्। मुखमुद्रणेऽपि हेतुः। अन्यथा तेषां भक्षणं स्यात्। कोलाहलश्च सम्भवति शकुनभाषणमन्योन्यं पदार्थनिरूपणं वा ॥१४॥

प्राया बताम्बेत्यत्र—सम्बोधनं दयार्थमिति। दयया भगवान्[1] निकट एव स्थापयेदितिभावः। तेषां शरेति। पल्लवैरेवावृताङ्गत्वेनान्यदर्शनाभावाच्छरादिभयाभाव इति केचित् ॥ १४ ॥

येद्यप्युक्ता एते हेतवस्तु साधका एव भवन्ति तथापि मन्दमन्देव भाति। यतो यत्रादरसपरा. स्वरूपरसान्तरायमपि सहन्ते तेन तात्पर्यान्तरमपि ज्ञेयम्। तथा हि। भुजपदतात्पर्यं पूर्वमेवोक्तम्। कदाचिद् वेणुशाखाद्यर्थं तत्र भक्ताना प्रभोर्गो तदानयनार्थं तदारोहणे सान्निध्यरसोऽप्यनुभूतो भविष्यती त्याशया तत्रारूढा इति विशेषणतात्पर्यम्। नेत्रनिमीलने पद्मानयनार्थं भक्ताना निःशङ्कप्रवृत्तिर्स्यादिति तथाकृति। वाङ्निरोधहेतु स्पष्ट। ॥ १४ ॥

प्रायो बताम्बेत्यत्र—अत इति। कपित्थादिरयं। रसान्तरमिति। विजातीय लौकिक वा। मधुर प्रवेश्यनेन विजातीयनिवृत्तिरुक्ता। भगवदुक्तेत्यादिना च लौकिकनिवृत्तिः ॥ १४ ॥

प्रायो बताम्बेत्यत्र—अत इति। कपित्थादिरयं। रसान्तरमिति। विजातीय लौकिक वा। मधुर प्रवेश्यनेन विजातीयनिवृत्तिरुक्ता। भगवदुक्तेत्यादिना च लौकिकनिवृत्तिः ॥ १४ ॥

१ भगवन्निकट इत्यपि पाठ। २ इदं श्रीमत्प्रभुचरणानां स्वतन्त्र व्याख्यानं पुस्तकेषु श्रीगुसाँईजीत्यत्र ... इत्यत्र ...।

